'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' (तै.उ.आन.३-१) इति श्रुतिप्रमाणितं किमिति निर्धारणाय प्रवृत्तेयं श्वेताश्वतराणां मन्त्रोपनिषत् । **ब्रह्मवादिनो वदन्ती**त्याख्यायिका विद्यास्तुति-प्रयोजनवती । ब्रह्मवदन्तीत्येवंशीला ब्रह्मवादिनो मुनयो वक्ष्यमाणरूपेण **वदन्तिस्म** । मीमांसन्त इत्यर्थः । कथं वदन्तिस्मेति वदनप्रकाराकाङ्क्षायामाह - **किमिति** । हे **ब्रह्मविदः! किं कारणं ब्रह्म?** 'यतो वा' इति - श्रुतौ जगत्कारणतयाऽभिहितं ब्रह्म किं देवतात्मकमस्ति? जगत्कारणं ब्रह्मादिषु देवेष्वन्तर्भूतं अनन्तर्भूतं वाऽस्तीत्यर्थः **कुतः स्म जाताः?** वयं कस्माद् ब्रह्मणो जाताः? **जीवाम केन?** अस्माकं स्थितिश्च किंप्रयुक्ता? **क्व च सम्प्रतिष्ठाः?** सम्प्रतिष्ठाशब्दाभिहितोस्माकं लयश्च कुत्र? अथ स्वप्रवृत्तिकारणमपि मीमांसन्ते - **अधिष्ठिता** इति । केन वा ब्रह्माख्येन देवेनाधिष्ठिता नियमिता वयं सुखेतरेषु प्राक्तनकर्मफलहेतुभूतेषु दुःखात्मकेषु जन्मसु **व्यवस्थां** विशिष्टामवस्थामनुसरन्तो वर्त्तामहे ।। १ ।।

**[कालादीनां ब्रह्मकारणत्वनिराकरणम्]**

**कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।**
**संयोग एषां न त्वात्मभावादात्माऽप्यनीशः सुखदुःखहेतोः ।। २ ।।**

**प्र.** - ननु कारणं ब्रह्म सिद्धवत्कृत्य किन्देवतारूपमिति प्रश्न एवानुपपन्नः । तस्यैवानभ्युपगन्तव्यत्वात् । लोके हि कालज्ञाः कालमेव सर्वकारणमाचक्षते । लोकायतिकास्तु स्वभावमेव हेतुमाचक्षते । मीमांसकास्तु नियतिलक्षणं कर्मैव हेतुं मन्यन्ते । अपरे अहेतुकत्वलक्षणं यादृच्छिकत्वम् । अपरे पञ्चभूतानि । प्रकृतिं केचित् । पुरुषं केचिदाचक्षते । तेषामन्यतमः पक्षोऽस्तु । किं ब्रह्मकारणवादाभ्युपगमेन इत्याशङ्क्याह **काल**[1] इति । कालादीनि कारणमित्येतन्न युक्तिसहम् । दोषाणां बहूनां स्फुरणात् । चिन्त्यम् न निश्चेतुं शक्यम्; अचेतनानां चेतनस्य वा प्रत्येकं हेतुत्वासम्भवात् इत्यर्थः ।

ननु एषां संयोगो हेतुर्भवितुमर्हति । न च एषां संयोजकाभावः शङ्कितव्यः । तेषां मध्ये आत्मनश्चेतनस्य संयोजकस्य सद्भावेन संयोगसम्भवात् इत्याशङ्क्य आत्मनः

---

१. **कालो** नाम सर्वभूतानां विपरिणामहेतुः **स्वभावः** । स्वभावो नाम पदार्थानां प्रतिनियता शक्तिः । अग्नेः औष्ण्यमिव **नियतिः** - अविषमपुण्यपापलक्षणं कर्म तद्वा कारणम् । **यदृच्छा** - आकस्मिकी प्राप्तिः । इति शंकरभाष्यम् (मूले योनिरिति प्रकृतिरुच्यते । भूतकारणवादिनस्तु चार्वाकादयः । तत्कारणभूतमात्राहंकारमहत्पूर्वतया प्रकृतेः कारणत्वं सांख्यसंमतम् (इति भाष्यपरिष्कारे)

स्वातन्त्र्ये सुखभोक्तृत्वमेव स्यात्; न दुःखभोक्तृत्वम् । अतः सुखदुःखानुभवितुः जीवस्यापि न नियन्तृत्त्वं सम्भवतीत्याह - **सयोगः - हेतोः ।** उक्तोऽर्थः । **न त्वात्मभावात्** इत्यत्र **तु** शब्दः एवार्थः । आत्मसद्भावात् संयोगः सम्भवतीत्येतन्नैवेत्यर्थः । ब्रह्मणोऽप्यपरिणामिनः उपादानत्वं च न सम्भवतीति भावः ।

**आ.भा. -** अथ कालस्वभावादीनां जगत्कारणतां निरस्यति - **काल** इति । कालविदः **कालः,** लोकायतिकाः **स्वभावः,** मीमांसका **नियति**रूपं कर्म, केचिद् **भूतानि,** सांख्या **योनि**पदवाच्या प्रकृतिः, केचित् **पुरुषः** जगत्कारणमिति वदन्ति । तच्चिन्त्यं विकल्पासहत्वात् । तथा हि - किमुक्तेषु चेतनाचेतनेषु पदार्थेषु प्रत्येकं जगत्कारणमुतैतेषां संयोगः! नाद्यः असम्भवात् । नापि द्वितीयः संयोजकाभावात् । तदाह - तु शब्द एवार्थकः । आत्मसद्भावादेषां संयोगो नैव, कुतः? यतः सुखदुःखहेतोरनीश आत्मा । आत्मा चेन्नानीशः सुखभोक्तैव स स्यात् । नैवमस्ति लोके तस्य दुःखभोक्तृत्वस्यापि प्रत्यक्षमीक्ष्यमाणत्वात् । सुखदुःखभोक्तृत्वेनानीशत्वादेवात्मा जगत्कारणमपि न । एतेन कालादयः अचेतनश्चेतनो जीवश्च न जगत्कारणमित्युक्तं भवति ।। २ ।।

**[देवशक्तिनिर्धारणम्]**

**ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं[1] स्वगुणैर्निगूढाम् ।**
**यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ।। ३ ।।**

**प्र. - ते** इति । एवं ध्यायनयोगयुक्ता मुनयः, 'अपहतपाप्मा दिव्यो देव एको नारायणः' (अध्यात्म.उ.१) इति श्रुतिप्रसिद्धदेवशब्दितनारायणात्मिकां कार्योपयोग्य-पृथक्सिद्धविशेषणत्वेन शक्तिशब्दितां सत्त्वरजस्तमोलक्षणस्वगुणोपेतां ब्रह्मणो जगत्कारणत्वनिर्वाहिकां प्रकृतिं दृष्टवन्त इत्यर्थः । ततः परं तच्छरीरकं सर्वविधकारणं सकलकारणाधिष्ठितारं समाभ्यधिकशून्यं परमात्मानमपि दृष्टवन्तः इत्याह - **यः कारणानीति ।** उक्तोऽर्थः ।। ३ ।।

---

१. **देवात्मशक्तिमिति** - 'आत्मा द्विविधः जीवात्मा, देवात्मा इति । तत्र जीवात्मनः ब्रह्मरुद्रकपिलादेः कारणत्वं न कथ्यते । देवात्मा तु कारणम् । देवात्मा नाम यः सर्वदा देव एव भवति सः, तद्भाष्यते, 'अपहतपाप्मा दिव्यो देव एको नारायण' इति । दिवु क्रीडायामिति निष्पन्नेन देवशब्देन 'लोकवत्तु लीलाकैवल्यम्' इति च दर्शितं भवति । शक्तिमिति अपृथक्सिद्धविशेषणरूपतया पदार्थस्वीकारप्रदर्शनात् उपादानत्वा-संभवादिदोषनिस्तारः' । शक्तिरित्यस्य कार्योपाधायकापृथक्सिद्धविशेषणमित्यर्थः । इति भाष्यपरिष्कारे ।

**आ.भा.** - उक्तेन प्रकारेण कालादीनां जगत्कारणत्वं प्रतिक्षिप्तमतस्तेभ्योऽतिरिक्तस्तेषां प्रेरकः सर्वेश्वरः कश्चिदस्ति जगत्कारणमित्यभिधत्ते - **ते** इति । **ध्यानयोगानुगताः-** ध्यानमेव योगस्तमनुगता युक्तास्ते मुनयः **स्वगुणैः** - स्वस्य प्रकृतेर्गुणैः सत्वरजस्तमांसि **तैर्निरूढां** - समन्विताम् । स्वपदेनैषां गुणानां परमात्मगुणत्वाभावः सूचितः । प्रकृतेर्गुणानाञ्च भेदप्रदर्शनाद् गुणसमूहस्य प्रकृतित्वाङ्गीकर्तॄणां सांख्यानां निरासोऽपि वेदितव्यः । **देवात्मशक्तिं** - देवात्मनः 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.२-१-३) इत्येवं प्रदर्शितस्य परब्रह्मणो भगवतः श्रीरामस्य शक्तिं जगदात्माककार्योपयिकापृथक्सिद्धविशेषणतया शक्तिपदेनोदीरिताम् । द्रव्यत्वसत्त्वेऽपि ब्रह्मणो जगत्कारणत्वनिर्वाहकत्वेन शक्तितयाऽभिहितामित्यर्थः । प्रकृतिमपश्यन्नवालोकन्त । परब्रह्मणो भगवतः श्रीरामस्य देवत्वमामनन्ति कतिचिच्छ्रुतिस्मृतयः तथाहि - 'अरं दासो न मीढुसे कराण्यहं देवाय भूर्णयेऽनागाः । अचेत यदचिता देवो अर्योगृत्स राये कबितरो जुनाति' ।। (ऋ.वे.७-८६-७) यो ब्रह्मा विष्णुर्महेश्वरो यः सर्वदेवात्मा (रामोत्तरतापिनी) इत्येतैर्ब्रह्मा सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवं स्तौति । ततो स्तुतो देवः प्रीतो भवति । स्वात्मानं दर्शयति । तस्माद् य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति । '**सोऽमृतत्वं** गच्छति - सोऽमृतत्वं गच्छति' । (श्रीरामतापनीयोपनिषत्.मन्त्र ५-४७)

ततः सहस्ताभरणान् प्रगृह्य विपुलान् भुजान् ।
अब्रुवंस्त्रिदशश्रेष्ठा राघवं प्राञ्जलिं स्थितम् ।।
कर्त्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानविदां विभुः ।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ।
कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे ।। (वाल्मीकि रा.यु.११७-५,६)
इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः ।
अब्रवीच्छृणु मे वाक्यं सत्यं सत्यपराक्रमः ।। १२ ।।
भवान् नारायणो देव....सीतालक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः ।। २७ ।।
आमोघं देव ते वीर्यं न तेऽमोघाः पराक्रमाः ।। २९ ।।
अमोघं दर्शनं राम अमोघस्तव संस्तवः ।
अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि ।। ३० ।।
ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति तथा कामानिह लोके परत्र च ।।

(वाल्मीकि रा.यु.११७-१२,२७,२९,३०,३१)

सनत्कुमारसंहितास्थे श्रीरामस्तवराजेऽपि -

रामं रघुवरं वीरं धनुर्वेदविशारदम् ।
मङ्गलायतनं देवं रामं राजीवलोचनम् ।। २० ।।
श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि ।। २५ ।।
नमोऽस्तु वासुदेवाय ज्योतिषां पतये नमः ।
नमोऽस्तु रामदेवाय जगदानन्दरूपिणे ।। ५० ।।
वरं वरेण्यं वरदं तु काव्यं सन्तारयत्याशु च सर्वलोकम् ।
सङ्कल्पितार्थप्रदमादिकाव्यं श्रुत्वा च रामस्य पदं प्रयाति ।। २८ ।।
ब्रह्मेशविष्ण्वाख्यशरीरभेदैर्विश्वं सृजत्यत्ति च पाति यश्च ।
तमादिदेवं परमं वरेण्यमाधाय चेतस्युपयाति मुक्तिम् ।। २९ ।।

(स्कन्दपुराणरामायणमाहात्म्ये)

आचार्यवर्यैर्भगवत्पादश्रीराघवानन्दचार्यैरप्यभिहितम् -

अशरण्यशरण्याय देवदेवाय वेधसे ।
व्यक्तषाड्गुण्यचेष्टाय राघवेन्द्राय मङ्गलम् ।। ५९ ।।

(श्री राघवेन्द्रमङ्गलमाला)

प्रकृतिलक्षणायां शक्तिमङ्गीकृतायां तद्द्वारकमेव जगदुपादानकारणत्वं परब्रह्मणो भगवतः श्रीरामचन्द्रस्यातो न तस्य घटोपादानकारणस्य मृत्पिण्डस्येव विकारित्वप्रसङ्ग इति ध्येयम् । उक्तञ्चैवमेव परिणामविमर्शे भगवद्भिः **श्रीद्वारानन्दाचार्यैः -**

उपादानं निमित्तं च जगतो राघवो मतः ।
श्रुतयो निर्विकारत्वं वदन्ति ब्रह्मणो ननु ।।
व्याकुप्येयुर्हि ताश्चैवं कुतश्चेदुच्यते यतः ।
विकारीति मतं सर्वैरुपादानं विचक्षणैः ।। ३ ।।
इति चेदुच्यते ह्यत्र नैवं वाच्यं कुतो यतः ।
प्रतिज्ञातं श्रुतौ सर्वज्ञानमेकस्य ज्ञानतः ।। ४ ।।
दृष्टान्तः कथितश्चापि मृत्कार्याणां मृदस्तथा ।
उपादानं घटादेर्हि मृत्तिका परिकीर्त्तिता ।। ५ ।।
परिणता यतो मृद्धि घटादिरूपतः खलु ।
उपादानस्य विज्ञानादुपादेयावबोधतः ।। ६ ।।

मृज्ज्ञानेन घटादीनां विज्ञानं सम्मतं तथा ।
एकस्य ब्रह्मणो ज्ञानाद् विज्ञानं जगदतस्तथा ।
उपादानं यतो ब्रह्म जगतोऽस्य मतं बुधैः ।
परिणतं यतो ब्रह्म जगद्रूपेण सम्मतम् ।। ८ ।।
व्यासेन प्रकृतिश्चेत्यादिकं हि सूत्रितं ततः ।
श्रीबोधायनवृत्तौ तद् व्याख्यातमेवमेव च ।
ब्रह्मणः परिणामो हि प्रकारद्वारको जगत् ।
विकारित्वं ततो द्वारे प्रकृतिपुरुषद्वये ।। १० ।।
स्वरूपे न स्वभावे च विकारः प्रकृतेः खलु ।
स्वभाव एव जीवस्य विकारः स्वीकृतो बुधैः ।।
ब्रह्मणस्तु विकारो यन्न स्वरूपस्वभावयोः ।
व्याकोपावसरः कश्चिच्छ्रुतीनां वर्तते न तत् ।।

अत एवोक्तं श्रीश्रुतानन्दाचार्यैः श्रौतसिद्धान्तबिन्दुप्रबन्धे -

त्रिधाऽपि श्रुतौ सर्ववित् सर्वशक्तिर्जगत्कारणं जानकीनाथ एव ।
ततः कापिलं गौतमीयञ्च शैवं च शाक्तं तथान्यन्मतं नानवद्यम् ।। ७ ।।
विकारञ्च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातं च नैति ।
प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्यकर्म ।। ८ ।। इति ।

प्रकृतिलक्षणशक्त्यवलोकनान्तरं तादृशशक्तिशरीरकं कालाद्यखिलकारणाधिष्ठितारं, परमात्मानमप्यपश्यन्नित्यभिधत्ते - **य** इति । यानि कालात्मयुक्तानि कालादारभ्यात्मान्तानि यानि कारणानि इतः प्रागुक्तानि तानि निखिलानि यश्चैकोऽधितिष्ठत्यधीष्टे तं सर्वकारणनियन्तारं परमात्मानं श्रीराममप्यपश्यन्नित्यर्थः ।

'राम एव परं ब्रह्म, राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम्' ।। ३ ।। (रामर.उ.१-६) इति श्रुतेः ।।

**तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः ।**
**अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ।। ४ ।।**

**प्र.** - चित्तावतारसौकर्याय तं चक्रत्वेन रूपयति - **तमेकने**मिमिति । परमात्मानं प्रकृत्याख्यैकनेमियुक्तं सत्त्वरजस्तमोगुणैः त्रिप्रकारतया **त्रिवृतं** - षोडशसंख्यायुक्तान्तशब्दित-विकारापेतं वाचकभूताकारादि पञ्चाशद्वर्णलक्षणारोपेतं द्वादशमासपञ्चर्त्वयनद्वयसंवत्सरात्मक-विंशतिप्रत्यरयुक्तमित्यर्थः। **प्रत्यराभि**रिति लिङ्गव्यत्ययः छान्दसः । अरा हि नाभिनेमिमध्यवर्ति-काष्ठविशेषाः । प्रत्यराश्च तद्दार्ढ्यार्थनिहिताः तन्मध्यवर्तिकाष्ठविशेषाः ।

**अष्टकैरिति** । अणिमाद्यैश्वर्याष्टकमेकम्[१]; प्राच्यादिदिगष्टकमपरम्; दिक्पालाष्टमेकम्[२]; 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा' (भ.गी.७-४) इति गीतोक्तं प्रकृत्यष्टकम्। अष्टौ प्रकृतयः इत्युक्तप्रकृत्यष्टकमन्यत्; ब्रह्म प्रजापतिर्देवा गन्धर्वा यक्षराक्षसाः । पितरश्च पिशाचाश्च इति **देवाष्टकमेकम्, अष्टौ वसवः**[३] । इत्युक्तवस्वष्टकम् । **अपहतपाप्मत्वादि**[४] **ब्राह्मगुणाष्टकम्**; दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलकार्पण्यमस्पृहा इति आत्मगुणाष्टकं वा । एवमेभिः (यथार्हं?) षड्भिरष्टकैः[५] उपेतम् । **विश्वरूपः** - विराट्पुरषः । स एव मुख्यः (एको?) पाशः । स्वाश्रितजगन्नैश्चल्यहेतुतया विराट्पुरुषः ब्रह्मचक्रस्य पाशरूप इत्यर्थः । **त्रिमार्गभेदं द्विनिमित्तैकमोहं** - देवयानपितृयाणक्षुद्रजन्तु-भवनलक्षणमार्गत्रययुक्तम्, तत्र च पितृयाणक्षुद्रजन्तुभवनलक्षणमार्गद्वयहेतु-भूतदेहात्मैक्यमोहमित्यर्थः अपश्यन्निति पूर्वेण सम्बन्धः ।। ४ ।।

**आ.भा. -** अथ चित्तावतारसौकर्यार्थं तच्छक्तितया निर्दिष्टां प्रकृतिं चक्रतया निरूपयति - **तमिति । तं** - परमात्मानमेका प्रकृतिपदाभिधेया नेमिर्यस्य स एकनेमिस्त**मेकनेमिं** प्रकृत्याख्यनेमिविशिष्टं **त्रिवृत्तं** त्रिभिःसत्वरजस्तमोभिर्गुणैर्वृत्तं षोडशान्तं षोडशसंख्याका अन्ता विकारा यस्य सः यद्वा प्राणादारभ्य नामपर्यन्तायाः षोडशकलास्ता-सामन्तोऽवसानं यस्मिन् स षोडशान्तस्तं **शतार्धारं** शतस्यार्धमकारादि-पञ्चाशद्वर्णात्मका अरा नाभिनेमिमध्यस्थकाष्ठविशेषा यस्य तं पञ्चाशत्संख्याकवर्णात्मकाराविशिष्टं **विंशतिप्रत्यराभिः**। अत्र प्रत्यराभिरिति लिङ्गविपर्ययश्छान्दसो ज्ञेयः । तथा च

---

१. अणिमा महिमा गरिमा लघिमा, प्राप्तिः प्राकाम्यं ईशत्वं वशित्वं इति अष्टैश्वर्याः ।

२. इन्द्रः, अग्निः, यमः निऋतिः, वरुणः, मरुत्, कुबेरः, ईश्वरः, इति अष्टदिक्पालाः

३. **अष्टौ वसवः** - धरः, ध्रुवः, सोमः, विष्णुः, अनिलः, अनलः, प्रत्यूषः, प्रभासः इति अष्टौ वसवः ।

४. **अपहतपाप्मत्वादिगुणाष्टकम्** - अपहतपाप्मा, विजरः, विमृत्युः, विशोकः, विजिघत्सः, अपिपासः, सत्यकामः, सत्यसंकल्पः ।

५. **षडष्टकम्** - विज्ञानभगवत्कृतविवरणे -

अ. **धात्वष्टकम्** - त्वक् चर्ममांसरुधिरमेदोस्थिमज्जा शुक्रं चेति ।

आ. **भावाष्टकम्** - धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि इति भावाष्टकम् ।

इ. **गुणाष्टकम्** - दया क्षान्ति अनसूयाशौचमङ्गलानायासकार्पण्या स्पृहा इत्यात्मगुणाष्टकम् ।

ई. **प्रकृत्यष्टकम्** - भूमिः, आपः, अनलः, वायुः, खं, मनः, बुद्धिः, अहंकार इति प्रकृत्यष्टकम् ।

उ. **देवाष्टकम्** - ब्रह्मा, प्रजापतिः, देवाः, गन्धर्वाः, यक्षाः, राक्षसाः, पितरः, पिशाचाश्च इति देवाष्टकम् ।।

ऊ. **मूर्त्यष्टकम्** - भवशर्वेशानपशुपत्युग्रभीमरुद्रमहोदेवाः इति मूर्त्यष्टकम् ।

द्वादशमासषड्ऋत्वयनद्वयात्मकैर्विंशतिसंख्याकैः प्रत्यरैरराणां दार्ढ्यार्थं निहितैस्तन्मध्यस्थैः काष्ठविशेषैश्च विशिष्टमित्यर्थः । षड्भिरष्टकैरुपेतम् । तत्रादिममष्टकमणिमाद्यैश्वर्याष्टकम् । प्राच्यादिदिगष्टकमिन्द्रादिदिक्पालाष्टकं वा द्वितीयम् । 'भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा' ।। (भ.गी.७.४) इति गीतोक्तं प्रकृत्यष्टकं तृतीयम् । 'ब्रह्म प्रजापतिर्देवा गन्धर्वा यक्षराक्षसाः । पितरश्च पिशाचाश्च च' इति देवाष्टकम् अष्टौ वसवः इति वस्वष्टकं वा चतुर्थम् । 'दयाक्षान्त्यनसूयाशौचानायासमङ्गलाकार्पण्या-स्पृहेत्यात्मगुणाष्टकं' पञ्चमम् । अपहतपाप्मत्वादिब्रह्मगुणाष्टकं षष्ठम् । एभिः षट्संख्याकैरष्टकरैन्वितम् विश्वरूपैकपाशं विश्वरूपः स्वाश्रितिजगदचलत्वकारणत्वेन बन्धकपाश इव विराट्पुरुष एव एको मुख्यः पाशो यस्य तम् । **त्रिमार्गभेदम् ।** त्रयो देवयानपितृयाणक्षुद्रजन्तुभवनात्मकास्त्रिसंख्याकमार्गभेदा यस्य स तम् । **द्विनिमित्तैकमोहम् ।** पितृयाणक्षुद्रजन्तुभवनरूपमार्गद्वस्य निमित्तं हेतुभूतो देहात्मैक्याभिमानात्मक एको मोहो यस्मात्तमपश्यन्निति पूर्वेण सम्बन्धः ।। ४ ।।

**पञ्चस्त्रोतोम्बुं पञ्चयोन्युग्रवक्त्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् ।**
**पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ।। ५ ।।**

**प्र.** - एवं चक्रत्वेन रूपयित्वा तच्छक्तित्वेन निर्दिष्टां प्रकृतिं वैराग्याय नदीत्वेन रूपयति - **पञ्चस्त्रोतः** इति । स्त्रोतोरूपेणाविच्छिन्नतया प्रवर्तमानानि तमोक्षराव्यक्त-महदहङ्काररूपाणि अम्बुस्थानीयानि यस्याः सा तथोक्ता । महाभूतोपादानतया योनिभूतानि **पञ्च** तन्मात्राण्येव उग्रवक्त्राणि प्रवाहमुखरूपाणि यस्याः सा **पञ्चयोन्युग्रवक्त्रा ।** प्राणापानादयः पञ्च ऊर्मिस्थानीया यस्याः सा **पञ्चप्राणोर्मिः । बुद्धेः** ज्ञानस्यादिभूतानि **पञ्च** ऊर्मिस्थानीया यस्या सा पञ्चबुद्ध्यादिमूला । पञ्च कर्मेन्द्रियाणि आवर्तस्थानीयानि **यस्याः सा पञ्चावर्ता ।** पञ्च महाभूतानि अत्यन्तप्रतिकूलतया प्रवर्तमानानि अत्यन्तप्रतिकूलतया प्रवर्तमानानि ओघ वेगस्थानीयानि यस्याः सा **पञ्चदुःखौघवेगा ।** अकारादिपञ्चादशद्वर्ण-लक्षणनामभेदयुक्ताम्; 'तमो मोहो महामोहस्तामिस्त्रो ह्यन्धसंज्ञितः'[१] (भवसं.उ-१०) इति पुराणप्रसिद्धपञ्चसृष्टिलक्षणपर्वपञ्चकयुक्तां ब्रह्मात्मिकां प्रकृतिं तदधिष्ठितारञ्च परमात्मानम् **अधीमः** - स्मराम इति **अपश्यन्** इति पूर्वेणान्वयः ।। ५ ।।

---

१. 'तमो मोहो महामोहस्तामिस्त्रो ह्यन्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा निबध्नाति नृणां सदा' ।। इति पूर्णश्लोकः ।

**आ.भा. -** अथ चक्रतया निरूपितां प्रकृतिं वैराग्यजननाय नदीत्वेनोपवर्णयति **पञ्चस्रोतोम्बुमिति** । पञ्चसंख्याकानि स्रोतोम्बूनि स्रोतस्तयाऽविच्छेदेन प्रवर्त्तमानानि-तमोऽक्षराव्यक्तमहदहङ्कारात्मकान्येवाम्बूनि यस्याः सा **पञ्चस्रोतोम्बुः** ताम् । पञ्चयोन्युग्रवक्त्राम् आकाशादिपञ्चमहाभूतोपादानकारणतया योन्यात्मकानि पञ्च पञ्चसंख्याकानि शब्दादितन्मात्राण्येव उग्राणि भीषाणानि वक्तृणि मुखानि यस्याः सा तथोक्ता ताम् । **पञ्चप्राणोर्मिं** पञ्चसंख्याकाः प्राणापानादय एवोर्मयस्तरङ्गा यस्याः सा तथोक्ता ताम् । **पञ्चबुद्ध्यादिमूलां** बुद्धेर्ज्ञानस्यादीनि ज्ञानेन्द्रियाणि । पञ्चबुद्ध्यादीनि मूलं यस्याः सा पञ्चबुद्ध्यादि मूला ताम् **पञ्चावर्त्तां** पञ्च कर्मेन्द्रियाण्येव आवर्त्ता सा तथोक्ता ताम् । **पञ्चदुःखौघवेगां** पञ्च पञ्चसंख्याकानि गर्भजन्मव्याधिजरामरणानि प्रतिकूलतया वेदनीयानि पञ्चमहाभूतान्येव वा दुःखानि ओघस्य वेगो यस्याः सा पञ्चदुःखौघवेगा ताम् । **पञ्चाशद्भेदां** पञ्चादशद्वर्णात्मका भेदा यस्याः सा पञ्चादशद्भेदा ताम् । **पञ्चपर्वां** पञ्च पञ्चसंख्याकानि पर्वाणि तमोमोहमहामोहतामिस्रात्मकपर्वाणि यस्याः सा पञ्चपर्वा तां नदीमिति शेषः । ब्रह्मात्मकनदी-रूपां प्रकृतिं तदधिष्ठातारं सर्वेश्वरं भगवन्तं श्रीरामञ्च वयमधीमः स्मरामः ।। ५ ।।

**सर्वाजीवे सर्वसंस्थे बृहन्ते अस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।**
**पृथगात्मानं प्रेरितारं[१] च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ।। ६ ।।**

एवं, किं कारणं ब्रह्म? कुतः स्म जाता? इति चिन्तायाः, देवात्मशक्तिं, यः कारणानि निखिलानि तानि इत्यनेन च देवशब्दितनारायण एव सर्वकारणम्, अपरिणामिनोऽपि तस्य कारणत्वनिर्वाहिका प्रकृतिरिति निस्तारो दर्शितः । अधिष्ठिताः केन सुखेतरेषु इति चिन्तायाः निस्तारं दर्शयति - **सर्वाजीवे** इति । सर्वान् आजीवयतीति सर्वाजीवम् । अनेन, जीवाम केन इत्यस्योत्तरमुक्तं भवति । **बृहन्ते -** बृहतीत्यर्थः । अतश्च निरतिशयबृहत्वादेव सर्वसंस्थत्वादिकं युज्यते इति भावः । तादृशे **ब्रह्मरूपे चक्रे,** हन्ति-गच्छति अनेकजन्मसहस्रसञ्चरणशील इति **हंसः** जीवः परवशतया, 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' (भ.गी.१८-६१) इत्युक्तरीत्या ब्रह्मचक्रेण भ्राम्यमाणोऽयं भ्रमयतीत्यर्थः । एतज्ज्ञानस्य फलमाह-**पृथगात्मानमिति**[२] । उक्तरीत्या भ्रमयितृत्वेन

---

१. **प्रेरितारमिति** । ईर क्षेपे । आधृषादित्वात् णिचो विभाषा । प्रेरयितारमित्यर्थः ।

२. 'पृथगात्मानं प्रेरितारं च मत्वा इति जीवात्मविसजातीयस्य तदन्तर्यामिणः ब्रह्मणः ज्ञानं परमपुरुषार्थ-लक्षणमोक्षसाधनमित्युपदेशाच्च' ।। इति (श्रीभाष्यं १-१-१)

परमात्मानम्, **तेन** - भ्राम्यमाणं तच्छरीरभूतञ्च स्वात्मानं **मत्वा** - तज्ज्ञानप्रीतेन परमात्मना प्रसन्नेन **जुष्टः** - प्रीत्या विषयीकृतस्सन् मुक्तिं प्राप्नोतीत्यर्थः । ततश्च **अमृतत्त्वं** फलप्राप्तिहेतुभूतज्ञानविषयस्य प्रेर्यप्रेरकलक्षणजीवपरभेदस्य परमार्थत्वमुक्तं **भवति** । अपरमार्थज्ञानस्य मोक्षहेतुत्वासम्भवादिति द्रष्टव्यम् ।। ६ ।।

**आ.भा.** - अथ जीवाम केन? क्व च सम्प्रतिष्ठा? अधिष्ठिताः केन सुखेतरेषु व्यवस्थां वर्त्तामहे? इति प्रश्नत्रयस्योत्तरमाह - **सर्वाजीवे** इति । सर्वानाजीवयतीति सर्वाजीवंतस्मिन् सर्वाजीवे सर्वाजीवनकर्त्तरि सर्वेषां संस्थाप्रलयो यस्मिंस्तत् **सर्वसंस्थं** तस्मिन् **सर्वसंस्थे** - सर्वलयस्थानभूते । कुतस्तस्य सर्वसंस्थत्वं युक्तमित्याशङ्यायामाह - **बृहन्ते** इति । निरतिशयबृहत्वशालिनीत्यर्थः, तस्मिन् **ब्रह्मचक्रे** ब्रह्मात्मके चक्रे **हंसो** गमनशीलो जीवो **भ्राम्यते** । ब्रह्मचक्रेण भ्राम्यमाणो भवति इत्यर्थः । अत्र 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' (भ.गी.१८.६१) । इति भवदुक्तिरनुसन्धेया । अथैतादृशस्य ज्ञानस्य फलमभिधत्ते - **पृथगात्मानमिति** । एवं **प्रेरितारं** स्वनियन्तृतया परमात्मानमात्मानं परमात्मनियाम्यतया तच्छरीरभूतं स्वात्मानञ्च पृथङ् **मत्त्वा** - विज्ञाय **ततस्तेन** निरुक्तज्ञानप्रीतेन ब्रह्मणा भगवता श्रीरामेण **जुष्टः** प्रीतः (प्रीतिविषयीकृतः सन्नित्यर्थः) सन्नमृतत्वं मोक्षम् एति अवाप्नोति । एतेन नियाम्यनियन्तृरूपजीवेश्वरभेदविषयकस्य **ज्ञानस्य** मोक्षम् एति हेतुत्वाभिधानेन जीवेश्वरभेदस्यापारमार्थ्यं वदन्तो निरस्ता वेदितव्या अपरमार्थविषयकस्य ज्ञानस्य मोक्षहेतुत्वासम्भवात् । ईरर्धातोराधृषादिगणवृत्तित्वात् प्रेरितारमिति णिज्विकल्पः ।। ६ ।।

**उद्‌गीतमेतत् परमं तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाक्षरं च ।**
**अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ।। ७ ।।**

**उद्‌गीतमिति** । एतच्चक्ररूपतया प्राङ्निर्दिष्टमेव, 'नारायणः परं ब्रह्म', (तै.ना.१३) 'स्वे महिम्नि प्रतिष्ठितः', (छां.उ.७-२४-२) 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' (बृ.उ.५-८-८) इत्यादिवेदान्तवाक्येषु परब्रह्मत्वेन स्वप्रतिष्ठत्वेन अक्षरत्वेन च **उद्‌गीतं** - उच्चैर्गीतम् । **उद्‌गीथमिति** पाठेऽपि स एवार्थः । **तस्मिन्** स्वप्रतिष्ठाक्षररूपे **ब्रह्मणि** प्रकृतिपुरुषकालरूपं त्रयमाश्रितमित्यर्थः । **अत्रान्तरमिति** । **तत्पराः** - ब्रह्मपराः ब्रह्मेप्सवः **अत्र** - ईदृशे (शं) प्रकृतिपुरुषकालानां विवेके (कं) तेषां परमात्मनश्च अपृथक्सिद्धतया आधाराधेयभावलक्षणम् **अन्तरम्** - अतिशयितं भेदं **विदित्वा** प्रकृतिबन्धनिर्मुक्तास्सन्तः परमं साम्यं प्राप्य भिन्नतया अदर्शनलक्षणलयं गता इत्यर्थः ।। ७ ।।

**आ.भा.** - चक्ररूपेण प्रागभिहितस्यैव परमतां सर्वाधारतां स्वमहिमप्रतिष्ठितताम् अक्षरताञ्चाभिधत्ते - **उद्गीतमिति** । उद्गीतमेतच्चक्ररूपेण प्रागभिहितम् । एवार्थकस्तु । **परमं** सर्वत उत्कृष्टं **ब्रह्म** । स्वप्रतिष्ठेति स्त्रीत्वं छान्दसम् । तथा च स्वस्मिन्नात्मीय महिम्नि प्रतिष्ठा यस्य तत् स्वप्रतिष्ठमक्षरमिति रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते (रामपूर्वताप.उ.१-६) ओं यो वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दात्मा यः परं ब्रह्म भूर्भुव स्वस्तस्मै वै नमो नमः ।। १ ।। (रामोत्तरताप)

'राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्म तारकम्' ।। (रामोपनिषत् १-६)

'नारायणं परं ब्रह्म' (तै.ना.१३) 'स्वे महिम्नि प्रतिष्ठितः' (छां.उ.७-२४-२) 'एतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति', (बृ.उ.३-८-८) इत्यादिश्रुतिषूद्गीतं परब्रह्मतया स्वप्रतिष्ठिततयाऽक्षरतया चोच्चैर्गीतम् । क्वचिदुद्गीथमिति पाठः । अर्थस्तु तत्राप्येष एव । तस्मिन् स्वप्रतिष्ठाक्षरात्मके परमब्रह्मणि **त्रयं** प्रकृतिपुरुषकालत्रयमाश्रितमिति शेषः । **वेदविदस्तत्पराः** तदेव ब्रह्म परमं येषां ते **तत्परा**ब्रह्मपराः । ब्रह्मावाप्तिकामा इत्यर्थः । अत्र अस्मिन् परमे ब्रह्मण्यन्तरं प्रकृतिपुरुषकालानां ब्रह्मशरीरत्वेन ब्रह्मापृथक्सिद्धत्वेनान्तरशब्दाभिहितमाधाराधेयभावात्मकं भेदं **विदित्वा** अवगम्य **योनिमुक्ताः** प्रकृतिसम्बन्धनिर्मुक्ताः सन्तो लीनाः परमं साम्यमवाप्य नामरूपविभागानर्हतामवाप्ताः ।। ७ ।।

**संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।**
**अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ।। ८ ।।**

**प्र.** - ननु प्रकृतिसम्बन्धे जीवपरयोरविशिष्टे सति जीवस्य कुतो बन्धः? परस्य कुतो नेत्यत्राह - **संयुक्तमिति** । **ईशः** परमात्मा **व्यक्तरूपं,** क्षरमचिद्वर्गम् **अव्यक्तं** - अक्षरं चिद्वर्गञ्च परस्परसंयुक्तं बिभर्ति; न तु बध्यते **अनीशो** जीवस्तु **बध्यते** कर्मफलभोक्तृत्वाभिसन्धिलक्षणभावसत्वात् । परमात्मनस्तु (परमात्मा तु?) 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' (भ.गी.४-१४) इत्युक्तरीत्या तस्य कर्मफलस्पृहाभावेन कर्मरूपाभावात्, स्वसंयुक्ततया प्रकृतिभरणेऽपि अपहतपाप्मत्वात् प्रकृतिसम्बन्धप्रतिभटः तत्प्रतिभटज्ञाने विषयश्चेति निर्गळितार्थः ।। ८ ।।

**आ.भा.** - नन्वविशिष्ट एव जीवपरमात्मनोः प्रकृतिसम्बन्धस्तर्हि जीव एव कुतो बध्यते न परमात्मेत्यत आह - **संयुक्तमिति** । **ईशः** परमात्मा **व्यक्ताव्यक्तं** क्षरमचिद्वर्गमक्षरं चिद्वर्गं **संयुक्तं** भोक्तृभोग्यतया मिथः संयुक्तमेतद् विश्वं सर्वं भरते

बिभर्त्त्यथापि स न बध्यते 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' । (भ.गी.४-१४) इति वचनप्रामाण्यात् कर्मफलस्पृहाभाववत्वेनापहतपाप्मत्वेन चेशस्य **कर्मलेपाभावात्** । अनीशश्चात्मा जीवस्तु भोक्तृभावादैहिकक्षुद्रफलकामनया निषिद्धस्यामुष्मिकफलकामनया च काम्यस्य कर्मणः कर्तृत्वाद् बध्यत एव । यदा तु भगवत्कृपया जातवैराग्यः **सन्** भगवन्निष्ठं सद्गुरुमासादयति तदा देवमनन्तकरुणावरुणालयं स्वप्रकाशं **देवशब्दवाच्यं** परब्रह्म भगवन्तं श्रीरामं **ज्ञात्वा** विदित्वा **सर्वपाशैः** कर्मक्लेशाद्यखिलपाशैर्मुच्यते । नित्यमनवधिकातिशयसुखरूपं च ब्रह्मानुभवात्मकं मोक्षमवाप्नोति ।। ८ ।।

**[जीवपरमात्मकथनम्]**

**ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।**
**अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ।। ९ ।।**

**प्र.** - परस्परवैलक्षण्यमेव प्रपञ्चयति - **ज्ञाज्ञौ** इति । पूर्वनिर्दिष्टयोर्मध्ये एकः **सर्वज्ञः** अत एव ईशश्च । अपरस्तु **अज्ञः** अनीशश्च । उत्पत्तिराहित्यं तु द्वयोरपि समानम् । **ईशनीशौ** इति दीर्घाभावः छान्दसः । **भोक्तुः** जीवस्य भोगरूपप्रयोजनयुक्ता उत्पत्तिरहिता काचनान्या प्रकृतिः इत्यर्थः । एवं तृतीयं उत्पत्तिराहित्येन समानमपि परस्परं विलक्षणमित्यर्थः ।

ननु प्रकृतेः जीवभोगोपकरणत्ववत् परमात्मनोऽपि भोगार्थत्वं कुतो न भवेत्? प्रत्युत एकैकशरीरजीवभोगार्थत्वे सकलशरीरकपरमात्मभोगार्थत्वमवर्जनीयमेवेति; **अत्राह** - **अनन्तश्चेति** । विश्वशरीरकस्यापि परमात्मनः, 'नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते' इत्युक्तरीत्या सत्यकामत्वाद्यनन्तगुणाश्रयस्य निरपेक्षस्य जीववत् कर्मफलाभिसन्धिपूर्वककर्तृत्वा-भावान्न तद्भोगार्थत्वं प्रकतेरिति भावः । एतादृशवैलक्षण्यज्ञानस्य फलमाह - **त्रयमिति** । **एतत् त्रयं यदा विन्दते** - परस्परवैलक्षण्येन दर्शनसमानाकारध्यानेन विषयीकरोति, तदा ब्रह्म भवति-मुक्तो भवतीत्यर्थः । एवमेव व्यासार्यैः, 'चमसवदविशेषात्' (ब्र.सू.१-४-८) इत्यत्र व्याख्यातम् । ब्रह्ममिति छान्दसं रूपम् ।। ९ ।।

**आ.भा.** - 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे.उ.१-८) इत्युक्तं **मोक्षकारणं** परमात्मविज्ञानम्, तच्च चिदचिद्वैलक्षण्यापन्नपरमात्मविषयकमेवेत्यभिदधाति - **ज्ञाज्ञाविति** । प्रागभिहितयोर्जीवपरमात्मा ज्ञः सर्वज्ञोऽत एवेशः । जीवेस्त्वज्ञेऽल्पज्ञोऽत एवानीशः । अजत्वमुत्पत्तिशून्यत्वम् । तच्चोभयोस्तुल्यमेव । **ईशनीशाविति** छान्दसो दीर्घाभावः । अजत्वेन जीवेश्वरतुल्या ताभ्यां भिन्नैका प्रकृतिरप्यस्ति । सा हि **भोक्तृभोगार्थयुक्ता** -

भोक्तुर्जीवस्य भोगरूपार्थेन विशिष्टा न तु परमात्मभोगार्थयुक्ता । कुत इति चेदाह - **अनन्तश्चेति । विश्वरूपो** विश्वशरीरकोऽप्यात्मा । सर्वान्तर्यामी परमात्मेत्यर्थः । यतः सत्यकामत्वाद्यनन्तकल्याणगुणाश्रयत्वेनानन्तोऽत एवाकर्त्ता न जीववत् फलमभिसन्धाय कर्मानुष्ठाताऽतो न प्रकृतेः परमात्मभोगार्थयुक्तत्वम् । ईदृशवैलक्षण्यज्ञानस्य किं फलमत आह - **त्रयमिति । एतत् त्रयं** चिदचिद्वीश्वरश्चेति तत्त्वत्रयं **यदा विन्दते** जीवो यदा मिथोविलक्षणतया दर्शनसमानाकारापन्नेन ध्यानेन विषयीकरोति तदा **ब्रह्मं** - ब्रह्म भवति ब्रह्मोपासनकाले सर्वेश्वर श्रीरामानुभविता भवति । अत्र ब्रह्ममिति मान्तत्वं छान्दसमिति वेदिव्यम् ।। ९ ।।

[क्षराक्षरविवरणम्]

**क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।**
**तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ।। १० ।।**

**प्र.** - संयुक्तमिति मन्त्रनिर्दिष्टक्षराक्षराशब्दार्थं विवृण्वन् परस्परवैलक्षण्यज्ञानमात्रेण मुक्तौ, मनननिदिध्यासनवैयर्थ्यमिति शङ्काञ्च शमयति - **क्षरं प्रधान**मित्यादिना । 'प्रधानं प्रकृतिः स्त्रियाम्' (अ.को.१-४-१५८) इति **प्रधान**शब्दिता प्रकृतिः **क्षर**मित्युच्यते । भोग्यमात्मनो भोगार्थं हरतीति **हरो** जीवः । सः **अमृताक्षरम् । अमृतत्वात् -** मरणधर्मशून्यत्वात् अक्षरमित्यर्थः । **क्षरात्मानौ.... एकः** - क्षराक्षरशब्दितचेतनाचेतनवर्गेशिता, 'अपहतपाप्मा दिव्यो देव एको नारायणः' (अध्यात्म.उ.१) इति निर्दिष्टो नारायण इत्यर्थः । **तस्याभिध्यानात्** इति । **अभिध्यानम्** - आरम्भणसंशीलनम् । **योजनं** - योगः । **तत्त्वभावः** - तत्त्वाविर्भावः । एतैः **अन्ते** - शरीरावसाने **भूयः** समस्तप्रकृतिसम्बन्धनिवृत्तिः इत्यर्थः । ततश्च 'त्रयं वेदा विन्दते ब्रह्ममेतत्' इति मन्त्रोक्ता मुक्तिः ब्रह्मोपासनकालीन-ब्रह्मानुभवरूपा इत्यर्थः ।। १० ।।

**आ.भा.** - अथाखिलप्रकृतिसंसर्गनिवृत्तिहेतुमभिधत्ते - **क्षरमिति** । 'संयुक्तमेतत् क्षरमक्षरञ्चे'त्यभिहितक्षरपदार्थमभिधत्ते - **प्रधानमिति** । प्रधानपदव्यपदिष्टं प्रकृतितत्त्वमिह क्षरम् । क्षरपदवाच्यमित्यर्थः । अथाक्षरपदं विवृणोति - **अमृताक्षरं हर** इति । भोग्यान् पदार्थान् स्वभोगार्थं हरतीति हरः जीव एवात्र मृत्युरहितमक्षरमित्यर्थः । न च रुद्रार्थकोऽयं हरशब्दो देव एक इत्यत्रैवान्वेति नामृताक्षरमित्यत्रेति वाच्यम्, व्यवधानादेतस्यैवामृताक्षर-पदस्योद्देश्यविधेयभावसमर्पणाभावाद् 'भवान् नारायणो देवः' इति (वा.रा.यु.कां.११७-१३)

ब्रह्मवाक्यस्य प्रमाणतया परब्रह्मणो भगवतः श्रीरामस्य वाचके देवशब्दे हरशब्दान्वयस्याशक्यत्वाच्च । क्षरश्चात्मा च **क्षरात्मानौ** प्रकृतिजीवात्मानावेको देवो सर्वेश्वर श्रीराम ईशते नियमन करोति । तस्याखिलचेतनाचेतननियन्तुर्देवशब्दाभिहितस्य ध्येयवस्तुभूतस्य भगवतः श्रीरामस्याभिध्यानादारम्भणपरिशीलनाद् योजनायोगाद् - भक्तियोगादित्यर्थः । तत्त्वभावाद्दर्शनसमानाकारज्ञानात्मकतत्त्वाविर्भावान्ते चरमदेहावसाने भूयो विश्वमायानिवृत्तिर्निखिलमायानिवृत्तिर्भवतीति शेषः ।। १० ।।

**ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।**
**तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ।। ११ ।।**

**प्र.** - ज्ञानसाध्यमुक्तिक्रमं दर्शयति - **ज्ञात्वेति** । दर्शनसमानाकारज्ञानेन विषयीकृत्य सर्वपाशशब्दितपापहानिर्भवति । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' (ब्र.सू.४-१-१३) इति सूत्रे दर्शनसमानाकारज्ञानारम्भसमये पूर्वोत्तरपुण्यापुण्यकर्मणाम्, 'उपासनावसाने क्षमिष्ये' इति भगवत्संकल्परूपाश्लेषविनाशौ भवत इत्युक्तेः । **क्षीणैः** क्लेशसाधनशरीरेन्द्रियादिभिः सह जन्ममृत्युप्रापककर्मणाम्, क्षान्तमिति सङ्कल्परूपा प्रकृष्टा हानिर्भवति । 'साम्पराये तर्तव्याभावात्' (ब्र.सू.३-३-२७) इत्यत्र सकलपुण्यापुण्यकर्मणां पूर्वं दर्शनसमानाकारज्ञानारम्भसमये, क्षमिष्ये इति भगवत्सङ्कल्पाश्लेषविनाशवतां क्षान्तमिति सङ्कल्परूपं प्रकृष्टहान्यभ्युपगमात् । तस्याभिध्यानपरमफलीभूतमपहतपाप्मत्वादिलक्षणं विश्वातिशायि तृतीयमैश्वर्यं तु प्राकृतदेहभिन्नशुद्धसत्वमयदेहभेदे भवति । **केवलः** - प्रकृतिसम्बन्धविनिर्मुक्त एव देशविशेषविशिष्टं ब्रह्म प्राप्य आप्तकामो भवति; न तु प्रकृतिमण्डले इति भावः ।। ११ ।।

**आ.भा.** - अथ पूर्वमन्त्रोक्ततत्त्वभावात्मकज्ञानसाध्याया मुक्तेः क्रममभिधत्ते - **ज्ञात्वेति । देवं** देवशब्दाभिधेयं परिपूर्णं ब्रह्म भगवन्तं श्रीरामं **ज्ञात्वा** दर्शनसमानाकारज्ञानविषयं कृत्वा पाश्यत एभिरिति **पाशः** बन्धहेतुभूतानि पुण्यपापात्मकानि कर्माणि । सर्वे च ते पाशाः सर्वपाशास्तेषामपहानिर्भवति । सर्वपाशापहानिश्च पूर्वोत्तरपुण्यापुण्यात्मककर्माश्लेषविनाश एव 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र.सू.४-१-१३), 'इतरस्याप्येवमश्लेषः पाते तु' (ब्र.सू.४-१-१४) इति सूत्रयोर्भगवता बादरायणेन तथैवोक्तत्वात् । स च पूर्वोत्तरकर्माश्लेषविनाशो भगवत्सङ्कल्पस्वरूप एव । उक्तं च, प्रमिताक्षरावृत्तिकृद्भिर्जगद्गुरुश्रीदेवानन्दाचार्यैः - 'तौ चोत्तरपूर्वाघयोरश्लेषविनाशौ' 'उपासनान्ते क्षमिष्ये' इति परब्रह्मणो भगवतः श्रीरामस्य

सङ्कल्पात्मकावेव' । (श्रीबोधायनवृत्तिसार ४-१-१३) इति जातायां च सर्वपाशापहानौ क्षीणैः क्लेशसाधकैर्देहेन्द्रियादिभिः सह जन्ममृत्युकारकाणां समेषां कर्मणां **प्रहाणिः** प्रकृष्टो विनाशश्च भवति । सूत्रितं च भगवता बादरायणेन 'साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये' (ब्र.सू.३-१-२७) इति । एषा प्रहाणिरपि 'क्षान्तम्' इति भगवत्संकल्पात्मिकैवेति ध्येयम् । तस्य परमात्मनोऽभिध्यानात् **तृतीयं** सर्वाधिकमपहतपाप्मत्वाद्यात्मकं सायुज्यलक्षणं स्वर्गाद्यैश्वर्यविलक्षणं विश्वात्मकब्रह्मण **ऐश्वर्यं** देहभेदे प्राकृतदेहविलक्षणे शुद्धसत्वमये देहविशेषे भवति । **केवलः** प्राकृतसम्बन्धमुक्त एव साकेताख्यदेशविशिष्टं ब्रह्मावाप्यैव आप्तकामो भवति, प्रकृतिमण्डले तु आप्तकामो नैव भवतीत्यर्थः ।। ११ ।।

**एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ।**
**भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।। १२ ।।**

**प्र. - एतज्ज्ञेयं - किञ्चित् ।** एवम्भूतं परं ब्रह्म आत्मनि अन्तर्यामितया संस्थितं ज्ञेयम् । ज्ञातवतश्च ज्ञातव्यान्तरं नावशिष्यते । **भोक्ता - ब्रह्ममेतत् ।** 'भोक्तृशरीरकत्वं भोग्यशरीरकत्वमपहतपाप्मत्वादिविशिष्टसत्यज्ञानादिस्वरूपत्वम् इति विधात्रयविशिष्टं ब्रह्म ज्ञातव्यम्' इति वेदार्थसंग्रहे वर्णितम् । केचित्तु, **भोक्ता भोग्यं प्रेरिता** इत्येतत् **त्रिविधं प्रोक्तमेतत्** सर्वं मत्वा ब्रह्म भवति - मुक्तो भवतीत्यर्थः । इत्युपसंहारः इति वदन्ति[1] । प्रेरिता इति वक्तव्ये **प्रेरितार**मिति छान्दसं रूपम् ।। १२ ।।

**आ.भा. -** अथ विश्वैश्वर्यमित्यभिधानेन जगद्व्यापारात्मकमैश्वर्यमपि मुक्तस्य स्यादिति सर्वप्रकारकं साम्यं परमात्मैक्यं वा तस्य स्यादित्येवम्भूतं मन्तव्यं वारयति - **एतदिति । एतत्** परं ब्रह्म नित्यमात्मासंस्थम् अन्तर्यामित्वेनात्मनि संस्थितमेव **ज्ञेय**मवबोध्यम् । जीवात्मदेवात्मनोः शरीरशरीरिसम्बन्धो मुक्तावपि तिष्ठत्येवेति न तदानीमपि जीवपरमात्मनोरैक्यं सर्वप्रकारकं साम्यं वा भवतीति भावः । तथा च विश्वैश्वर्यमपि तस्य प्राकृतविश्वातिशायि जीवात्मना सम्पादयितुं शक्यं विश्वमैश्वर्यमित्यर्थो वेदितव्यः । ननु निर्गुणदशायामैक्यं स्यादेवेत्यत आह - **नात** इति । अत एवम्भूताद् ब्रह्मणः **परं** किञ्चिदपि **वेदितव्यं** ज्ञेयान्तरं **न** नावशिष्यत इत्यर्थः । भोक्तृभूतचेतनशरीरको **भोग्यं** भोग्यभूताचेतनशरीरकः । **प्रेरितार**मिति द्वितीयान्तत्वं छान्दसम् । तथा च

---

१. शाङ्कराः वदन्ति इत्यर्थः ।

**प्रेरिता** नित्यनिरतिशयानन्तदिव्यगुणगणाश्रयो भगवान् श्रीराम **एतत् त्रिविधं प्रोक्तम्** अभिहितं सर्वं **मत्त्वा** ज्ञात्वा **ब्रह्मं** ब्रह्मसाम्यापन्नो मुक्तो भवति । ब्रह्ममिति मान्तत्वं छान्दसम् ।। १२ ।।

**वह्नेर्यथा योनिगतस्य मूर्तिः न दृश्यते नैव च लिङ्गनाशः[1] ।**
**स भूय एवेन्धनयोनिगृह्यः तद्वोभयं[2] वै प्रणवेन देहे ।। १३ ।।**

**प्र.** - ननु एतत् ज्ञेयं नित्यमेवात्मसंस्थम् इति अनुपपन्नम् । आत्मसंस्थस्य परस्यानुपलम्भात् इत्याशङ्क्य, यथा अरणिगतस्य वह्नेः प्रत्यक्षेणानुपलम्भेऽपि **मथने** धूमोपलम्भात् न तत्सत्ता अपह्नवार्हा, एवं प्रत्यक्षाद्यग्राह्यस्याप्यात्मसंस्थस्य परमात्मनः प्रणवनिर्मथने उपलभ्यमानत्वात् न तत्सत्ता अपह्नवार्हा इत्याह-**वह्नेरिति** । **योनिगतस्य** - कारणभूतारणिगतस्य **मूर्तिः** - स्वरूपं प्रत्यक्षेण न दृश्यते । लिङ्गं तु दृश्यते । पश्चात् मथने सति इन्धनयोनितया इन्धनप्रभवतया गृह्यते । तद्वत् **प्रणवेन** परमात्मशरीरभूते जीवे शोध्यमाने पूर्वमप्रतीतस्य अन्तर्यामिणः सूक्ष्मवस्त्राञ्चलान्तर्गतमाणिक्यवत् प्रत्यग्वस्त्वन्तर्गतस्योपलब्धिर्भवतीत्यर्थः । **तद्वोभयम्** इत्यत्र **वा**शब्दः इवार्थः ।। १३ ।।

**आ.भा.** - अथात्मसंस्थस्य परमात्मनोऽनुपलब्धिशङ्कामपाकरोति - **वह्नेरिति ।** यथा योनिगतस्यारण्यादिकाष्ठवृत्तेर्वह्नेर्विभावसोर्मूर्तिः स्वरूपं न दृश्यते प्रत्यक्षप्रमाणेन नोपलभ्यते किन्तु **लिङ्गनाशो** लिङ्गस्य वह्न्यनुमापकस्य धूमात्मकस्य लिङ्गस्य दर्शनं नैवास्ति किन्त्वरण्यादिमथने सति धूमस्योपलब्धिरेव भूयः पश्चान्मथने सति स वह्निरेव इन्धन **योनिगृह्यः** इन्धनात्मकयोनिप्रभवत्वेन गृह्यते । तद्वेत्यत्र वाशब्दः सादृश्यार्थकः । तथा च **तद्वा** तद्वत् **प्रणवेन** प्रणवात्मकेन साधनेन देहे 'यस्यात्मा शरीरम्' (बृ.उ.५-७-२६) इति श्रुत्यभिहितपरमात्मदेहात्मके जीवात्मनि शोध्यमाने सत्युभयमात्मलक्षणदेहस्थं ब्रह्म तल्लिङ्गं चोपलब्धं भवति । प्रेरकत्वादिना लिङ्गेनात्मसंस्थस्य ब्रह्मण उपलब्धिर्भवतीत्यर्थः ।। १३ ।।

**आत्मानमरणिं[3] कृत्वा प्रणवं चोत्तरारणिम् ।**
**ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ।। १४ ।।**

**प्र.** - प्रणवेन प्रकाशप्रकारमेव दर्शयति - **आत्मानमिति ।** स्वात्मनि प्रणवेन ध्यायमाने तदन्तर्गत **आत्मा निगूढवत्** स्थितः प्रकाशत इत्यर्थः ।। १४ ।।

---

१. **लिङ्गनाशः** - लिङ्गानुपलम्भः । णश अदर्शने (धा.पा.११९४) इति हि धातुः ।

२. उभयम् देवात्मा तच्चिह्नश्चेति द्वयम् ।

३. **स्वदेहमरणिं** - इति शाङ्करसम्मतः पाठः ।

**आ.भा.** - प्रणवेन यथा तत् प्रकाश्यते तदाह - **आत्मानमिति** । **आत्मानं** स्वात्मानमरणिम् अधरारणिं **कृत्वा** विधाय । प्रणवेन स्वात्मनो ध्यानं कृत्वेत्यर्थः । **ध्याननिर्मथनाभ्यासाद्** ध्यानमेव स्वप्रेरकत्वादिचिन्तनमेव निर्मथनं तस्याभ्यासाद् **देवं** द्योतनस्वभावशालिस्वान्तर्यामिणं भगवन्तं श्रीरामम् । निगूढवत्[1] । अत्रारणिदृष्टान्तबलेन निगूढवदित्यस्य निगूढाग्निवदित्यर्थः । स्वात्मनि स्थितं पश्येदुपलभेत ।। १४ ।।

**तिलेषु तैलं दधनीव सर्पिरापः स्रोतस्स्वरणीषु चाग्निः ।**
**एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ।। १५ ।।**

**प्र.** - तदेव प्रपञ्चयति - **तिलेषु** - **पश्यति** । यथा तिलादिस्थिततैलादिकं यन्त्रपीडनाद्युपायेन गृह्यते, एवं सत्यतपोलक्षणोपायेन परमात्मा गृह्यत इत्यर्थः ।। १५ ।।

**आ.भा.** - अथोक्तमेव प्रपञ्चयति - **तिलेष्विति** । यथा यन्त्रपीडनेन **तिलेषु तैलं** मथनेन **दधनि** सर्पिः भूखननेन स्वोतस्स्वापो मथनेनारणिषु चाग्निर्गृह्यत **एवं** यः पुरुष **एनं** परमात्मानं **सत्येन तपसा** चोपायेनानुपश्यति तेनासौ **आत्माऽऽत्मनि** स्वात्मनि गृह्यत उपलभ्यते ।। १५ ।।

**सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।**
**आत्मविद्यातपोमूलं तत् ब्रह्मोपनिषत्परम् तद्ब्रह्मोपनिषत्परम् ।। १६ ।।**

**।। इति प्रथमोऽध्यायः ।।**

**प्र.** - **सर्वव्यापिन**मिति । क्षीरार्पितसर्पिस्समतया सर्वव्याप्तम् आत्मानं प्रत्यगात्मविद्यया तपसा च ज्ञेयमुपनिषदां **परं** - प्रतिपाद्यं तत् परं ब्रह्म विद्यादित्यर्थः । द्विर्वचनम् आदरार्थमध्यायसमाप्तिद्योतनार्थञ्च ।। १६ ।।

**।। इति प्रथमाध्याय प्रकाशिका ।।**

**आ.भा.** - अथ प्रकरणार्थस्योपसंहारं करोति - **सर्वव्यापिनमिति** । क्षीरे पयस्यर्पितं व्याप्तं सर्पिरिव घृतमिव सर्वं व्याप्तुं शीलमस्येति सर्वव्यापी तं **सर्वव्यापिनमात्मानमात्मविद्यातपोमूलम्** आत्मविद्यया तपसा च ज्ञेयमुपनिषत्परमुपनिषदां परमं प्रतिपाद्यं तं **तत्** परं **ब्रह्म** विद्यादिति शेषः । द्विरुक्तेरादराधिक्यमध्यायसमाप्तिं च द्योतयति ।। १६ ।।

**।। इति प्रथमाध्याय आनन्दभाष्यम् ।।**

---

१. **निगूढवत्** - इत्यस्य निगूढाग्निवत् इत्यर्थः अरणिनिदर्शनबलात्, पश्येद्ब्रह्माग्निगूढवत् इति ध्यानबिन्दूपनिषद्दृष्टप्रवृतजातीयमन्त्रचतुर्थपादतश्च ज्ञायते । अन्यानि च निगूढानि अनन्तरमन्त्रेण दर्श्यन्ते । प्रणवेन मथनञ्च निहितप्रतिषिद्धाचरणानाचरणपूर्वकमित्युच्यते **सत्येन** इत्यादिना । **सत्यं** - यमान्तर्भूतम्, **तपो** - नियमान्तर्गतम् । एवं **सत्यं** - सामान्यधर्मः, **तपो** विशेषधर्मः । (भाष्यपरिष्कारे)

## अथ द्वितीयोऽध्यायः

**युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ।**
**अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभवत् ।। १ ।।**

**प्र.** - आत्मासंस्थपरमात्मप्रतीत्यौपयिकेन्द्रियनिग्रहरूपतपस्सिद्ध्यनुगुणं भगवत्प्रार्थनामन्त्रमाह - **युञ्जानः** इति । **धियः सविता** - प्रेरकः परमात्मा पृथिव्याः **अधि** ऊर्ध्वं **अग्निं ज्योतिः** - अग्निरूपं ज्योतिः - **निचाय्य** - संपूज्य अग्निहोत्रादिकर्म (दिकं) कृत्वा **मनः तत्त्वाय** - साक्षात्काराय पृथिवीनिष्ठाग्निज्योतिस्सदृश-स्वात्मनिष्ठपरमात्मतत्त्वसाक्षात्काराय **युञ्जानः** - नियुञ्जानः **आभवत्** - भवति इत्यर्थः । (तत्त्वसाक्षात्काराय परमात्मनि मनो नियञ्जानो भवतु इत्यर्थः) ।। १ ।।

**आ.भा.** - प्रथमाध्याये मुख्योपायतया ध्यानमभिहितम् । तत्प्रकारमवगमयितुमारभ्यते द्वितीयोऽध्यायः । परमात्माऽऽत्मसंस्थस्तत्प्रतीत्युपयोगीन्द्रियनिग्रहलक्षणतपः सिद्ध्यनुगुणपरमात्मविषयकप्रार्थनासम्बन्धिमन्त्रमभिधत्ते - **युञ्जानः** इति । अत्र धी पदं सर्वेन्द्रियाणामुपलक्षणम् । तथा च **धियः** सकलेन्द्रियाणां **सविता** गायत्रीमन्त्रप्रतिपाद्यः सर्वेषां प्रेरकः परमात्मा श्रीरामः 'एतत्सवितुर्वरेण्यं ध्रुवमचलममृतं भर्गाख्यं विष्णुसंज्ञं सर्वाधारं धाम,' 'ओं यो वै श्रीरामचन्द्रः स भगवान् यश्च सूर्यो भूर्भुवः स्वस्तस्मै वै नमो नमः' (रामोत्तरतापिनी २७) 'ओं यो वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दात्मा ये च द्वादशादित्या भूर्भुवः स्वस्तस्मै वै नमो नमः' (रा.ता.) 'सविता सर्वभूतानां सर्वभावान् प्रसूयते । सवनात् पवनाञ्चैव सविता तेन उच्यते' ।। (याज्ञवल्क्यः) 'प्रजानां च प्रसवनात् सवितेत्यभिधीयते' ।। (विष्णुधर्मोत्तरं) 'सूर्यस्यापि भवेत् सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः' । 'आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम् । भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम्' ।। (सनत्कुमारसंहितास्थः श्रीरामस्तवराजः) । सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम् । (रामस्तवं) 'ब्रह्मा विष्णुश्च रुद्रश्च त्वमेव रघुनन्दन' ।। (रामस्तवं) ततो रामशरीरे वै रामः पश्यति भार्गवः । आदित्यान् सवसून् रुद्रान् साध्यांश्च समरुद्गणान् ।। (महाभारते) इत्यादि श्रुतेः स्मृतेश्च । प्रेरणार्थकात् षूधातोस्तृचि

सवितेति निष्पन्नः । पृथिव्याः क्षितेरध्यूर्ध्वमग्निमनग्न्यात्मकं **ज्योतिर्निचाय्य** सम्यक् पूजयित्वाऽग्निहोत्रादिकर्म कृत्वा **तत्त्वाय** तत्त्वसाक्षात्काराय पृथिवीवृत्त्यग्निज्योतिः सदृशात्मवृत्तिपरमात्मसाक्षात्कारायेत्यर्थः । **मनो युञ्जानो** नियुञ्जान **आभवद्** भवतु ।। १ ।।

**युक्तेन मनसा वयं देवस्य सवितुः सवे ।**
**सुवर्गेयाय शक्त्या ।। २ ।।**

**प्र. - युक्तेनेति । सवितुः -** प्रेरकस्य परमात्मनः **सवे** - अनुज्ञायां सत्याम् अनुज्ञया इति यावत् । **युक्तेन मनसा -** आत्मप्रवणेन चेतसा युक्ता वयं **सुवर्गेयाय -** स्वर्गशब्दितभगवल्लोकसाधनाय परमात्मनिदिध्यासनाख्यकर्मणे **शक्त्या** युक्ता भवेम इत्यर्थः ।। २ ।।

**आ.भा. -** अथ तदनन्तरकृत्यमाह - **युक्तेनेति ।** देवस्य 'भवान् नारायणो देवः' (वाल्मीकि रा.यु.११७-२७) 'मङ्गलायतनं देवं रामं राजीवलोचनम्' ।। (रामस्तवं) इति प्रामाण्याद् देवशब्दवाच्यस्य स्वजनहर्षप्रदस्य **सवितः** प्रेरयितुः सर्वेश्वरस्य भगवतः श्रीरामस्य **सवे** अनुज्ञायां सत्यामनुज्ञयेत्यर्थः । **युक्तेन** भगवदुन्मुखेन **मनसा** चेतसा विशिष्टा **वयं सुवर्गेयाय** - अनवधिकातिशयानन्दविशिष्टभगवल्लोकसाधनाय भगवन्निदिध्यासनकर्मणे **शक्त्या** युक्ता भवेमेति शेषः ।। २ ।।

**युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवम् ।**
**बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ।। ३ ।।**

**प्र. -** परमात्मा प्रणिपातमात्रेण कथमनुज्ञां प्रयच्छेत् इत्याशङ्क्य भगवदन्तरङ्गभूत-विष्वक्सेनाद्याचार्यप्रणामपूर्वकं भगवत्प्राप्तौ यतमानानामनुज्ञां प्रयच्छतीत्याह - **युक्त्वायेति । सुवः** - स्वर्गं लोकं भगवल्लोकं **यतः** गतान् **देवान्** - पूर्वाचार्यान् **मनसा युक्त्वाय** - छन्दसि, क्त्वो यक् (पा.सू.७-१-४७) इति यक् । **मनसा युक्त्वाय** - प्रणम्येति यावत् । **दिवं** द्योतमानं निरतिशयबृहत्त्वयुक्तं परमात्मरूपं ज्योतिः **धिया** उपासनरूपज्ञानेन **करिष्यतः** - विषयीकरिष्यतः, ध्यातुं, प्रवृत्तानिति यावत् **तान्** - मुमुक्षून् **सविता** - प्रेरकः परमात्मा **प्रसुवाति** - अनुजानाति इत्यर्थः (इति वयं मन्यामहे इति शेषः) ।। ३ ।।

**आ.भा.** - अथ स्वान्तरङ्गभूतश्रीहनुमदाद्याचार्यप्रणतिपूर्वकं स्वप्राप्तौ यतमानानामेव भगवाननुज्ञां ददातीत्येतदाह - **युक्त्वायेति । सुवः** सुवर्पदप्रतिपाद्यमनवधिकातिशयानन्दविशिष्टं भगवल्लोकं **यतः** प्राप्तान् **देवान्** द्योतमानान् हनुमदादीन् पूर्वाचार्यान् **मनसा युक्त्वाय,** अत्र छन्दसि 'क्त्वो यक्' (पा.सू.७-१-४) इति यक् । तथा च मनसा युक्त्वायेत्यस्य प्रणम्येत्यर्थः । **दिवं** द्योतनस्वभावं **बृहत्** निरतिशयबृहत्वविशिष्टं परमात्मलक्षणं ज्योतिर्धियोपासनात्मकेन ज्ञानेन **करिष्यतो** विषयीकरिष्यमाणान् **तान्** मुमुक्षून् **सविता** निखिलप्रेरकः सर्वेश्वरो भगवान् श्रीरामः **प्रसुवाति** अनुजानाति ।। ३ ।।

**युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।**
**वि होत्रा दधे वायुनाविदेक इन्महीदेवस्य सवितुः परिष्टुतिः ।। ४ ।।**

**प्र.** - परमात्मनि मनोयोगः तत्समाराधनं कर्म च, **केषाञ्चिदेव** भवतीत्याह - **युञ्जत** इति । 'विप्रो विप्रत्वं गच्छते तत्त्वदर्शी' इत्युक्तरीत्या **विप्राः** - तत्त्वदर्शिनः परमात्मनि **मनः नियुञ्जते** - योजयन्ति । **धियः** ध्यानानि च योजयन्ति । **विप्रस्य** - 'प्रा पूरणे' (धा.पा.१०६१) - पूर्णस्य, **बृहतो** गुणैः बृहत्त्वाश्रयस्य **विपश्चितः** - सर्वज्ञस्य **महीदेवस्य** - मह्या - भूम्या समेतस्य **देवस्य** - श्रीभूमिसमेतस्य **सवितुः** - प्रेरकस्य **वयुनावित्** - वयुनं ज्ञानम् । **वयुनाविदिति** छान्दसो दीर्घः - तस्य सार्वज्ञ्यादिमहिमवित् इत्यर्थः । तदाश्रयः **एक इत्** - एक एव **परिष्टुतिः** - परिष्टुतीरित्यर्थः । छान्दसं । ह्रस्वत्वम् (परिचर्येति?) परिचर्या इति यावत् । **होत्रा** - ऋत्विग्भिः, - मन्त्रेणेति वार्थः **विदधे** - कृतवान् इत्यर्थः । ब्रह्मस्वरूपविदेव तत्परिचर्याकारी; तेन कृतमेव भगवत्परिचरणं भगवत्प्रीणनं भवतीत्यर्थः ।। ४ ।।

**आ.भा.** - अथ ब्रह्मस्वरूपवेत्तारं एव भगवति मनो नियुज्य भगवत्समाराधनात्मकं कर्म कुर्वन्तीत्याह - **युञ्जत** इति । विप्राः तत्ववेत्तारो **मन उत धियो** मनोऽतिरिक्तान्यन्यान्यपि ज्ञानेन्द्रियाणि परमात्मन्येव **युञ्जते** योजयन्ति । **विप्रस्य** परिपूर्णस्य **बृहतो** - बृहद्गुणाश्रयस्य **विपश्चितः** सर्वज्ञस्य द्योतमानस्य **सवितुः** अखिलप्रेरयितुर्भगवतः श्रीरामस्य **वयुनाविद्** वयुनं ज्ञानं तद्वित् । छान्दसो दीर्घः । भगवतः सार्वज्ञ्यादिमहिम्नो वेत्तेत्यर्थः । **एक इत्** एक एव **मही** महतीः **परिष्टुतिः** परिष्टुतीः । अत्र ह्रस्वत्वं छान्दसम् । परिचर्या इत्यर्थः । होत्रा ऋत्विग्भिर्मन्त्रेण वा **विदधे** कृतवान् । भगवत्सार्वज्ञ्यादिमहिमज्ञानमेव भगवत्प्रीतिहेतुरिति तादृक् ज्ञानमेव मुमुक्षुभिः अर्जनीयमित्यर्थः ।। ४ ।।

**युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः ।**
**शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ।। ५ ।।**

**प्र. - युजे वाम्** इति । दिव्यस्थानस्थिताः सर्वे ब्रह्मपुत्राः मत्प्रार्थनां शृण्वन्तु । **सूरेः -** नित्यसूरिकर्तृका, स्तुतिपथादनपेतत्वेन **पथ्या** - स्तुतिः । **वां पूर्व्यं** - वः पूर्वमित्यर्थः । वचनव्यत्ययश्छान्दसः । सा (सः) तादृशं ब्रह्म यथा प्राप्नोति, एवं **युजे -** योगाय - ब्रह्मप्राप्तये इति यावत् । मया कृतः **विश्लोकः -** विविधः श्लोकः स्तोत्ररूपः **एतु** - प्राप्नोतु । नित्यसूरिकृतां स्तुतिं यथा भगवान् अङ्गीकरोति, एवम् अङ्गीकरोतु इत्यर्थः । ततश्च योगप्रवृत्तेः प्राक् भगवत्स्तुतिः कर्तव्या इत्युक्तं भवति ।। ५ ।।

**आ.भा.** - अथ योगप्रवृत्तेः प्राक्तनस्य सर्वेश्वरस्तवस्य कर्तव्यतामाह - **युज** इति । **ये दिव्यानि** प्राकृतलोकविलक्षणानि **धामानि** नित्यधामपदवाच्यानि धामान्यातस्थुर्नित्यधामस्थितास्ते **विश्वे** सर्वेऽमृतस्याविनाशिनो **ब्रह्मणः पुत्राः** पुत्रतुल्या नित्यमुक्ता इत्यर्थः । शृण्वन्तु आकर्णयन्तु मम प्रार्थनामिति शेषः । **सूरेः** नित्यसूरिकर्तृकत्वविशिष्टा पथोऽनपेता पश्या स्तुतिर्वा **पूर्व्यं वः** पूर्वम् । अत्र वामिति वचनव्यत्ययश्छान्दसः । तथा **विश्लोको** ब्रह्मेव भगवन्तं श्रीरामं यथा प्राप्नोति । मया कृतः स्तुतिरूपो विविधः श्लोको नमोभिर्नमस्कारैः सह **युजे** योगाय । ब्रह्मावाप्तय इत्यर्थः । एतु आप्नोतु । हे हनुमदादयो नित्यमुक्ता भवद्भिस्तथाविधेयं यथाभवत्कृतां स्तुतिमिव भगवान् श्रीरामो मत्कृतामपि स्तुतिमङ्गीकुर्यादिति नित्यमुक्तविषयप्रार्थना अभिप्रायः । अत्र ब्रह्मणो नित्यसूर्यपेक्षया पूर्वत्वं तु नित्यसूरिणां ब्रह्मणोऽनुत्पन्नत्वेऽपि ब्रह्माधीनस्वरूपस्थितिप्रवृत्तिकत्वादेव बोध्यम् ।। ५ ।।

**अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते ।**
**सोमो यत्रातिरिच्यते तत्र सञ्जायते मनः ।। ६ ।।**

**प्र.** - योगमारम्भमाणस्य शीतोष्णदेशः परिहर्तव्य इत्याह - **अग्निरिति । अभिमथ्यते** - अभितो निवार्यते । **अधिरुध्यते** - आधिक्येन रुध्यते । वायुर्यत्र न वातीत्यर्थः । **सोम**शब्देन हिमं लक्ष्यते । अतिशयेन **रिच्यते** - निरस्यते । तत्र मनः प्रत्यक्प्रवणं जायत इत्यर्थः ।। ६ ।।

**आ.भा.** - अथ योगमारम्भमाणस्य शीतोष्णदेशपरिहरणीयतामाह - **अग्निरिति । यत्र** यस्मिन् देशे अग्निः पावकः **अभिमथ्यते** अभितो **मथ्यते** निवार्यते । यत्र **वायुर्मातरिश्वाऽधिरुच्यते** - अधिकतया रुध्यते । यत्राधिकं वायुर्न वातीत्यर्थः । यत्र च **सोमः** सोमपदलक्षितो हिमो **नातिरिच्यते** - अतिशयेन निरस्यते **तत्र मनो** - ध्येयोन्मुखं संजायते ।। ६ ।।

**सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यम् ।**
**तत्र योनिं कृण्वसे न हि ते पूर्तिमक्षिपत् ।। ७ ।।**

**प्र. - सवित्रा** इति । एवं गुरुप्रणामभगवत्स्तुतिप्रसन्नेन सवित्रा कृतेन **प्रसवेन -** अनुज्ञया तदनुज्ञातस्सन् इति यावत् । **पूर्व्यं -** पूर्वपृष्टं (श्रेष्ठं) **ब्रह्म जुषेत -** सेवेत । ध्यायेदिति यावत् । **तत्र -** परमात्मनि **योनिं -** स्थानं - मनसि इति शेषः **कृण्वसे -** कुरुष्व । तथा सति **ते पूर्तिं -** मनोरथपूर्तिं तत् - ब्रह्म **नाक्षिपत् -** न क्षिपति । न निरस्यतीत्यर्थः लडर्थे लङ् ।। ७ ।।

**आ.भा. -** अथ योगमारभमाणस्य ध्येयमाह - **सवित्रा** इति । सवित्रोक्तेन प्रकारेण कृताभ्यां गुरुप्रणामभगवत्स्तुतिभ्यां प्रसन्नतामवाप्तेनाखिलप्रेरकेन परमात्मना कृतेन **प्रसवेना**नुज्ञया योगे प्रवर्त्तमानः **पूर्व्यम् -** पूर्वे दृष्टं **ब्रह्म जुषेत -** सेवेत । ध्यायेदिति यावत् । **तत्र -** तस्मिन् परमात्मनि **योनिम् -** मनोनिष्ठां कुरुष्व । **हि** यस्मात् तथा कृते सति तद्ब्रह्म **ते -** तव **पूर्तिं -** समीहितपूरणं **नाक्षिपत् -** न क्षिपति । समीहितपूर्तिं न निरस्यति इत्यर्थः । अत्राक्षिपदिति लडर्थे लङ् ।। ७ ।।

**त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य ।**
**ब्रह्मोडुपेन प्रतरेतविद्वान् स्त्रोतांसि सर्वाणि भयावहानि ।। ८ ।।**

**प्र. -** योगदशेतिकर्तव्यतामाह - **त्रिरुन्नत**मिति । उरःकण्ठशिरःप्रदेशेषु **उन्नतम्** इतरत्र **समं शरीरं** स्थापयित्वा सर्वाणीन्द्रियाणि हृदयकुहरे **संनिवेश्य ब्रह्मोडुपेन -** प्रणवलक्षण (ब्रह्मस्वरूप) प्लवेन ब्रह्मध्यानेन इत्यर्थः । **सर्वाणि भयावहानि** नानाविधानि जन्म **स्त्रोतांसि** तरेत् इत्यर्थः ।। ८ ।।

**आ.भा. -** अथ संसारतारकयोगदशाप्रकारमभिधत्ते - **त्रिरुन्नत**मिति । त्रीण्युन्नतानि यस्मिंस्तत् **त्रिरुन्नतम्** उरोग्रीवाशिरोदेशेषून्नतमन्यत्र **समं शरीरं स्थाप्य** संस्थाप्येत्यर्थः । **इन्द्रियाणि सर्वाणि** चेन्द्रियाणि **मनसा हृदि** हृदये **संनिवेश्य** संनिधाय । संनियम्येत्यर्थः । **बह्मैवोडुपो** ब्रह्मोडुपस्तेन ब्रह्मोडुपेन ब्रह्मपदवाच्यप्रणवात्मकेन **प्लवेन ।** ब्रह्मध्यानेनेत्यर्थः । यद्वा 'श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम्' (रामस्तवः) इत्यागमवचनप्रामाण्याद् ब्रह्मसंज्ञकेन षडक्षरश्रीराममन्त्रप्लवेन यद्वा ब्रह्मलक्षणप्लवेन । भगवत्साहाय्येनेत्यर्थः । **विद्वान् सर्वाणि भयावहानि** भयप्रदानि **स्त्रोतांसि** विविधयोनिजन्मस्त्रोतांसि **प्रतरेत्** प्रकर्षेण तरेत् ।। ८ ।।

**प्राणान् प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ।**
**दुष्टाश्वयुक्तमिव वाहमेनं[1] विद्वान् मनो धारयेताप्रमत्तः ।। ९ ।।**

**प्र.** - प्राणायामप्रकारमाह - **प्राणान्** इति । 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु' (भ.गी.६-१७) इत्युक्तरीत्या मितायासः प्राणवायुं निरुध्य निरुद्धेषु अत्यन्तपीडापरिहाराय नासिकया रेचनं कुर्यात् । ततश्चावहितस्सन्, दुष्टाश्वयुक्तं रथं यथा सारथिः स्ववशं करोति, तथा मनोनिरोधज्ञो मनः स्ववशं कुर्यात् इत्यर्थः ।। ९ ।।

**आ.भा.** - अथ प्राणायामविधिमभिधत्ते - **प्राणानिति । इह** योगकाले **स** पूर्वोक्तो **विद्वान्** 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा' ।। (भ.गी.६-१७) इति भगवद्वचनानुसारेण **युक्तचेष्टः** परिमितचेष्टः सन् **प्राणान् प्रपीड्य** प्राणानां निरोधं विधाय **प्राणे क्षीणे** सति पीडां परिहर्तुं **नासिकया** नासारन्ध्रेणो**च्छ्वसीत्** निरुद्धस्य प्राणवायोः रेचनं विदध्यात् । **ततोऽप्रमत्तः** प्रमादरहितः सन् दुष्टाश्व युक्तं **वाहं** स्यन्दनमिव । यथा निपुणः सारथिर्दुष्टतुरङ्गयुक्तं रथं स्ववशं करोति तथेत्यर्थः । **एनं मनो धारयेत्** स्ववशं नयेत् । अत्रेनमिति पुंस्त्वं छान्दसम् ।। ९ ।।

**समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश(श्र)यादिभिः ।**
**मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणेन योजयेत् ।। १० ।।**

**प्र.** - योगानुष्ठानयोग्यं देशं विस्तरेणाह - **सम** इति । निम्नोन्नतत्वादिरहिते परिशुद्धे क्षुद्रपाषाणवह्निसिकतारहिते वाद्यध्वनिजलाशयाद्यत्यन्तसामीप्यरहिते **मनोनुकूले** चक्षुःपीडाहेतुभूतौष्ण्या(ल्कादि) रहिते गुहादिलक्षणनिवातदेशाश्रयणेन योगमनुतिष्ठेत् इत्यर्थः । सूत्रितश्चैतत्, 'यत्रैकाग्रता तत्राविशेषात्' (ब्र.सू.४-१-११) इति ।।

तत्र हि, आसीनस्तिष्ठन् गच्छन् वोपासीत अविशेषात् इति पूर्वपक्षे (श्रिते) उच्यते - 'आसीनः सम्भवात्' (ब्र.सू.४-१-७) । आसीन एव उपासीत । तस्यैव उपासनस्य सम्भवात् । तिष्ठतो गच्छतश्च यत्नसापेक्षत्वात्, शयानस्य निद्राप्रसक्तेश्च, उपासनस्य ध्यानरूपत्वाच्च एकाग्रचित्ततावश्यम्भावात्, चित्तैकाग्र्यस्य आसनसापेक्षत्वाच्च आसीन एव कुर्यात् । 'अचलत्वञ्चापेक्ष्य' (ब्र.सू.४-१-९) 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षम्' (छां.उ.७-६-१) इत्यादिषु निश्चलत्वधर्मेण ध्यातृसाम्यव्यपदेशदर्शनात् ध्यातृनिश्चलत्वस्यापेक्षितत्वात् निश्चलत्वस्य च आसिकामन्तेरणासम्भवात् आसीन एव कुर्यात् । 'स्मरन्ति

---

१. वाहः - रथः

च' (ब्र.सू.४-१-१०), 'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' (भ.गी.६-१२) इति । 'यत्रैकाग्रता तत्राविशेषात्' (ब्र.सू.४-१-११) 'समे शुचौ[1] शर्करावह्निवालुकाविवर्जिते' इत्यविशेषेण एकाग्रतानुकूलदेशविशेषस्यैवाङ्गत्वकीर्तनात् तेनैव (च) न्यायेन एकाग्रतानुकूलस्य आस(साध)नस्यापेक्षिततत्वमस्तीति अवसीयते इति स्थितम् । प्रकृतमनुसरामः ।। १० ।।

**आ.भा.** - अथ योगानुष्ठानार्हं देशमभिधत्ते - **सम** इति । **समे** निम्नोन्नतभावशून्ये **शुचौ** पवित्रे **शर्करावह्निवालुकाविवर्जिते** क्षुद्रोपलपावकसिकताविरहिते **शब्दजलाश्रयादिभिः** कलहादिध्वनिजलाशयादिभिश्च विरहिते इति शेषः । **मनोऽनुकूले** चित्तानुकूल्यविशिष्टे **न तु चक्षुपीडने** चक्षुः पीडाजनकोष्णत्वादिशून्ये । अत्र चक्षुपीडने इत्यत्र छान्दसो विसर्गलोपः । **मनोऽनूकूले** चित्तानुकूल्यविशिष्टे देशे **गुहानिवाताश्रयणेन** गुहादिरूपवायुशून्यस्थानं समाश्रित्य **योजयेद्** योगानुष्ठानं कुर्यात् । सूत्रितञ्च भगवद्भिर्बादरायणैः 'यत्रैकाग्रता तत्राविशेषात्' (ब्र.सू.४-१-११) इति । व्याख्यातञ्च तत् श्रीबोधायनवृत्ति-सारापरपर्यायप्रमिताक्षरावृत्तिकारैर्जगद्गुरुभिः श्रीदेवानन्दाचार्यैः - 'समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोऽनूकूले न तु चक्षुपीडने गुहानिवाताश्रयणेन योजयेत्' ।। (श्वे.उ.२-१०) इत्यविशेषेणैकाग्रतानुकूलदेश-विशेषस्यैवांगत्वाभिधानाद् 'यत्र देशे काले वा मनसि एकाग्रता स्यात् तत्रोपासीत' (प्रमिताक्षरावृत्तिः ४-१-११) इति ।। १० ।।

**नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशिनाम् ।**
**एतानि रूपाणि पुरस्सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ।। ११ ।।**

**प्र.** - योगमभ्यस्यतो ब्रह्माभिव्यक्तिप्राचीनानि तच्चिह्नानि आह - **नीहारेति** । प्रथमतो नीहारवत् स्फुरति, ततो **धूमार्कानि** (न) लाद्याकारतया स्फुरति । एवम्भूतानि स्फुरणानि पूर्वप्रवृत्तानि आगामि **ब्रह्माभिव्यक्तिचिह्नानि** इत्यर्थः ।। ११ ।।

**आ.भा.** - अथ योगानुष्ठातुर्ब्रह्माभिव्यक्तिचिह्नान्यभिधीयन्ते - **नीहारेति** । साधकेन योगे प्रारब्धे क्रमशः **नीहारधूमार्कानिलानलानां** तुषारधूमरविपवनपावकानां **खद्योतविद्युत्स्फटिकशशीनां**[2] खद्योतविद्युत्स्फटिकचन्द्रमसां क्रमशः स्फुरणानि भवन्ति ।

---

१. तथा चोक्तं गीतायां -
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ।। (भ.गी.६-११)

२. खद्योत......शशीनाम् । इति रामानन्दसम्मतः पाठः ।

अत्र शशीनामिति छान्दसं दैर्घ्यम् । **एतानी**मानि **रूपाणि** स्फुरणानि योगे ब्रह्मण्याविष्क्रियमाणे **ब्रह्मणि पुरस्सराणि** पूर्ववृत्तानि **अभिव्यक्तिकराणि** योगिनश्चित्त आविर्भूतानि भवन्ति ।। ११ ।।

**पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।**
**न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ।। १२ ।।**

**प्र. -** योगाभ्यासस्य कायसिद्धिफलकत्वमाह - **पृथ्वीति । गुणो -** गुणनमभ्यासः । योगाभ्यासे प्रवृत्ते सति योगमहिम्ना सत्त्वप्रचुरभूतारब्धे पाञ्चभौतिके शरीरे **समुत्थिते** तादृशसर्वरोगादिदाहसमर्थत्वेनाग्निरूपेण योगेनारब्धशरीरयुक्तस्य पुंसो रोगादिर्न (सं) भवतीत्यर्थः ।। १२ ।।

**आ.भा. -** गुणनं गुणोऽभ्यासो योगस्य गुणो योगगुणः तस्मिन् योगाभ्यासे योगिनः कार्यसिद्धिमभिधत्ते - **पृथिवीति ।** प्रवृत्ते सति **पृथिव्यप्तेजोऽनिलखे** सत्त्वप्रचुरपृथिव्यादिपञ्चभूतसमारब्धे **पञ्चात्मके** पञ्चभूतात्मके देहे **समुत्थिते** योगाग्निमयं सर्वरोगदहनसमर्थयोगाग्निप्रचुरं शरीरं **प्राप्तस्य** योगाग्निमयशरीरविशिष्टस्य योगिनो **न रोगो** भवति **न जरा** भवति **न च मृत्यु**र्मरणं भवति ।। १२ ।।

**लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवञ्च ।**
**गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ।। १३ ।।**

**प्र. - लघुत्वम्** इति । स्पष्टोऽर्थः ।। १३ ।।

**आ.भा. -** अथ प्रथमां योगप्रवृत्तिमाह - **लघुत्वमिति ।** यदा योगे प्रवृत्तस्य देहे **लघुत्वमारोग्यं** रोगराहित्यम् **अलोलुपत्वं** विषयवैतृष्ण्यं **वर्णप्रसादं** शरीरवर्णोज्वलत्वं **स्वरसौष्ठवं** स्वरसौन्दर्यं शुभो **गन्धः** शरीरे **शुभो** गन्धोऽल्पं **मूत्रपुरीषं** मूत्रमलयोर्न्यूनता च दृश्यते तदा योगसिद्धिज्ञापिकां **प्रथमाम् आद्यां योगप्रवृत्तिं वदन्ति** योगतत्त्वज्ञा इति शेषः ।। १३ ।।

**यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्त(क्त)म् ।**
**तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ।। १४ ।।**

**प्र. -** योगमभ्यस्यतो ब्रह्मोपलब्धिप्रकारं तत्फलञ्चाह - **यथैवेति ।** मृदा अयसा वा **उपलिप्तः -** निर्मितः प्रतिमाविशेषः सुधाविशेषान्त (विशेषाख्य?) रञ्जकद्रव्यलिप्तस्सन् तेजोमयतया दीप्यते । **तद्वत्** सुधाविशेषलिप्ततेजोमयप्रतिमासमं दर्शनसमानाकारध्यानेनोपलभ्य

कश्चित् पुरुषधौरेयो निवृत्तसंसारगन्धः सिद्धार्थो भवतीत्यर्थः । तद्वा इत्यत्र **वा शब्दः** इवार्थः । **तद्वत् सतत्त्वं प्रसमीक्ष्येति** पाठेऽप्ययमेवार्थः । केचित्तु सुधान्तमिति मत्वा सुधौतमित्यर्थे (सुधातरित्यर्थे) सुधान्तमिति शब्द इत्यपि वदन्ति ।। १४ ।।

**आ.भा. -** अथ योगसाधकस्य ब्रह्मसाक्षात्कारप्रकारं तत्फलञ्चाभिधत्ते - **यथैवेति । यथा मृदयोपलिप्तं** मृदाऽयसा वोपलिप्तं **बिम्बं** प्रतिमाविशेषः **सुधान्तं** सुधाविशेषाख्यरञ्जक द्रव्यलिप्तं **तत् तेजोमयं** सद् **भ्राजते** दीप्यते **तद्वा** तद्वत् सुधाविशेषोपलिप्ततेजोमयबिम्बमिव कश्चिद् **देही** पुरुषश्रेष्ठः **आत्मतत्त्वं प्रसमीक्ष्य** दर्शनसमानाकारध्यानेनोपलभ्य **वीतशोकः** निवृत्तसंसारताप्रयुक्तशोकः सन् **कृतार्थः** सिद्धार्थो **भवते** भवतीत्यर्थः । तद्वेत्यत्र वाशब्द इवार्थकः ।। १४ ।।

**यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।**
**अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः।। १५।।**

**प्र. - यदाऽऽत्मेति । यदा** योगयुक्तः परमात्मप्रतीत्युपायभूतेन प्रणवप्रतिपादित-परमात्मशेषभावेन प्रत्यगात्मना साधनेन(सम्बन्धेन)तत्स्थं परम् अनादिम् अनन्तं हेयप्रतिभटं अस्त्रभूषाध्यायोक्तरीत्या[1] सर्वतत्त्वात्मकास्त्रभूषणोपेतं परं ब्रह्म सूक्ष्मवस्त्रान्तरितमाणिक्यवत् (यदा) पश्येत्, तदा सर्वं (बन्धक)कर्महानिर्भवतीत्यर्थः ।। १५ ।।

**आ.भा. -** अथान्तर्यामिब्रह्मतत्त्वावबोधेन सर्वबन्धनिवृत्तिमभिधत्ते - **यदेति । यदा** युक्तो योगानुष्ठातेह देहे **दीपोपमेन** दीपसदृशप्रकाशमानेन परमात्मावबोधोपायात्मकेन **आत्मतत्वेन** परमात्मशेषभूतेन प्रत्यगात्मना साधनेनान्तर्यामिरूपेण तस्मिन्नात्मनि **स्थितं ब्रह्मतत्त्वं** सूक्ष्मवस्त्रान्तरितमाणिक्यसदृशं **प्रपश्येद्** ध्यानेनानुभवविषयं कुर्यात् तदेव । **तु**शब्द एवार्थकः । अजमनादिं ध्रुवं नित्यमुत्पत्तिविरहविशिष्टध्वंसाप्रतियोगिनं **सर्वं** तत्त्वैः 'भूषणास्त्रस्वरूपस्थं यथेदमखिलं जगत् । बिभर्ति भगवान् विष्णुः'...... (वि.पु.१-२२) इति पुराणरत्नवचनप्रामाण्यात् सर्वतत्त्वरूपभूषणास्त्रैरुपेतमिति शेषः ।

---

१. अस्त्रभूषाध्यायः - विष्णुपुराणे प्रथमांशे द्वाविंशाध्यायः अस्त्रभूषणाध्यायः ।

**भूषणास्त्रस्वरूपस्थं यदेतदखिलं जगत् ।**
**बिभर्ति भगवान्विष्णुस्तन्ममाख्यातुमर्हसि ।। ६६ ।।**

इत्यारभ्य **विद्याविद्ये च मैत्रेय बुद्ध्यहंकारमेव च ।। ७७ ।।** इति पर्यन्तं । अनेन दिव्यमङ्गलविग्रहोपासनमपि व्यञ्जितम् ।।

**विशुद्धं** समस्तहेयप्रतिभटं देवं 'भवान्नारायणो देवः' (वाल्मीकि युं.कां.११७-२७) इति ब्रह्मवाक्यप्रामाण्यात् देवपदवाच्यं सर्वेश्वरं श्रीरामं ज्ञात्वा साक्षादनुभवविषयं विधाय **सर्वपाशैः** पाशशब्दाभिहिताविद्यारूपनिखिलकर्मबन्धैर्मुच्यते ।। १५ ।।

**एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।**
**स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति विश्वतोमुखः ।। १६ ।।**

**प्र. -** तस्य सर्वात्मकत्वं प्रपञ्चयति - **एष हि** इति । हे **जनाः** इति परस्परं मुनीनां संबोधनम्। 'दिव्यो देव एको नारायणः' (अध्यात्म.उ.१) इति देवत्वेन प्रसिद्धः परमात्मैव **सर्वाः प्रदिशः**[1] प्रकृष्टदिग्वर्तिपदार्थविशेषाः इत्यर्थः । **नु** शब्दश्चार्थे । **पूर्वं** हिरण्यगर्भरूपेणोत्पन्नोऽप्ययमेव **विश्वतोमुखः -** सर्वविधो गर्भस्थजन्तुः (जातः) जनिष्यमाणश्च स एवेत्यर्थः ।

ननु भिन्नभिन्नजीवानां कथमेकात्मकत्वमित्याशंक्य आह - **प्रत्यङ्**[2] इति । अहमिति भासमानत्वं प्रत्यक्त्वम् । सर्वेषां प्रबुद्धानां वामदेवादीनामात्मनाम् अहमिति प्रतीतौ परमात्मनोऽपि भासमानतया तस्य सर्वं प्रति प्रत्यक्त्वात् तस्य सर्वान् प्रति आत्मत्वमुपपद्यते । न चास्मदाद्याहम्बुद्धौ परमात्मनोऽभानात् कथमस्मदादीन् प्रति प्रत्यक्त्वमिति वाच्यम् - दोषवशादभानेऽपि योग्यत्वसत्वेनादोषात् ।। १६ ।।

**आ.भा. -** अथ परमात्मनः सर्वात्मकतामभिधत्ते - **एष** इति । अथ मुनयः परस्परं सम्बोधयन्ति - हे **जनाः** इति । **एषः हि देवः** 'विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम् । श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि' ।। (रामस्तव) इत्याद्यागमनवचनप्रामाण्यात् देवपदवाच्यः सर्वेश्वरः श्रीराम एव सर्वात्मत्वेन सर्वशब्दवाच्यत्वात् **सर्वाः** प्रदिशस्तद्वृत्तिपदार्थश्च । **नु** पदश्चार्थे **ह** शब्दश्चार्थकः । **पूर्वो हि जातः** कल्पादौ सकलेभ्यः **पूर्वो** हिरण्यगर्भरूपेणोत्पन्नोप्येष एव । **गर्भे अन्तः स उ** गर्भस्थोऽपि **स एव जातः स जनिष्यमाणो** जातो **जनिष्यमाणश्च** स एव । अतो **विश्वतोमुखः** सर्वतो मुखोऽखिलचेतनाचेतनवाचकसर्वपदवाच्यः सर्वान् प्रति **प्रत्यङ्**

---

१. **प्रदिशः -** प्रदिशः बहुव्रीहिः । सर्वा इति स्त्रीलिङ्गानुसारात् अबहुव्रीहिर्वा । प्रकृष्टा दिशः प्रदिशः । (भाष्यपरिषारे)

२. **प्रत्यङ्जनाः** इत्यत्र प्रत्यङ्मुखा इति तैत्तिरीयपाठः एष हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखाः तिष्ठति विश्वतोमुखः ।। इति । (तै.आर.१०-१-३) (इति भाष्यपरिष्कारे)

सन् सर्वत्र तिष्ठति । परस्परं भिन्नानां जीवानां कथमेकात्मकत्वमित्याशंकां **निरस्यति** - **प्रत्यङ्** इति । प्रत्यक्त्वं नामाहमर्थत्वेन भासमानत्वम् । वामदेवादीनामहमिति प्रत्यये भासमानत्वेन प्रत्यक्त्वात् परमात्मनः सर्वान् जीवान् प्रति प्रत्यक्त्वम् । नन्वस्मदाद्यहम्प्रत्ययोऽभानात् कथमस्मदादीन् प्रति प्रत्यक्त्वं परमात्मनः इति चेन्न, दोषवशादभानेऽपि योग्यतासत्वेन दोषाभावात् ।। १६ ।।

**यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश ।**

**य ओषधीषु[1] यो वनस्पतिषु तस्मै देवाय नमो नमः ।। १७ ।।**

**।। इति द्वितीयाध्यायः ।।**

**प्र.** - अन्तर्यामितया सर्वात्मत्वम्; न तु स्वरूपेणेत्येतत् प्रदर्शयति - **यो देवः** इति । स्पष्टोऽर्थः ।। १७ ।।

**।। इति द्वितीयाध्याय प्रकाशिका ।।**

**आ.भा.** - परमात्मनो न स्वरूपेण सर्वत्वं किन्त्वन्तर्यामित्वेनैवेत्यावेदयति - **यो देवो । देव** शब्दावाच्यः परमेश्वरः न स्वरूपेण किन्त्वन्तर्यामितयैव अग्नावप्सु **विश्वं भुवनं** शाल्यादि **ओषधीषु** अश्वत्थादिषु **वनस्पतिषु चाविवेश । तस्मै** सर्वान्तर्यामित्वेन सर्वात्मने **देवाय** देवशब्दवाच्याय परमात्मने श्रीरामाय **नमो नमोऽस्तु ।** द्विर्वचनमध्यायसमाप्त्यर्थमादरार्थञ्च बोध्यम् ।। १७ ।।

**।। इति द्वितीयाध्याय आनन्दभाष्यम् ।।**

---

१. य ओषधीषु शाल्यादिषु वनस्पतिषु अश्वत्थादिषु तस्मै विश्वात्मने भुवनमूलाय परमेश्वराय नमो नमः ।। इति शंकरभाष्यम् ।।

ओषध्यफलपाकान्ताः बहुपुष्पफलोपगाः ।
अपुष्पा फलवन्तो ये ते वनस्पतय स्मृताः ।
पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ।
गुच्छगुल्मं तु विविधं तथैव तृणजातयः ।।
बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च ।।

(म.स्मृ. १-४६, ४७,४८)

तथा चोक्तं -

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ।। इति ।

# अथ तृतीयोऽध्यायः

**[भगवानेव मोक्षप्रदः]**

**य एको जालवानीशत ईशनीभिः सर्वान् लोकानीशत ईशनीभिः ।**
**य एवैक उद्भवे सम्भवे च य एतद्विदु[1]रमृतास्ते भवन्ति।। १।।**

**प्र.** - उक्तज्ञानस्य फलमाह - **य एक** इति । 'अपहतपाप्मा दिव्यो देव' (अध्यात्म उ - १ ) इति देवत्वेन श्रुतिप्रसिद्धः परमात्मा प्रकृतिशब्दितमायारूपवागुरा[2]युक्तस्सन् ईशनसमर्थाभिः ज्ञानबलक्रियाशक्तिभिः मायाजालगोचरान् प्राकृतांश्च(न्)लोकानीष्टे तदगोचरान् अप्राकृतांश्च लोकान् ईष्टे । यश्च जगतः **उद्भवे** उत्पत्तौ, **सम्भवे** - समीत्येकीकारे लयापरपर्याये एकीभावे च (य)ईष्टे, **तज्ज्ञानं** मोक्षसाधनमित्यर्थः ।। १ ।।

**आ.भा.** - प्राग्योगेनात्मसाक्षात्कारपूर्वकब्रह्मसाक्षात्कारः कथं सम्पाद्यत इत्येतदभिधायास्मिन् तृतीयेऽध्याये केवलं ब्रह्मण एव मोक्षप्रदातृत्वमस्तीति प्रतिपाद्यते । तत्र परमात्मनः सर्वेशितृत्वसर्वजगदुत्पत्यादिकारकत्वविषयकस्य ज्ञानस्य फलमाह - **य एक** इति । य 'इति रामपदेनासौ परब्रह्माभिधीयते' इत्यादि श्रुतिप्रसिद्धः सर्वेश्वरः श्रीराम **एव को जालवान्** जालपदाभिहितमायात्मकवागुराविशिष्टस्सन्नीशनीभिः ईशनसामर्थ्य-विशिष्टाभिर्ज्ञानबलक्रियाशक्तिभिः **सर्वान्** मायाजालगोचरानखिलान् प्राकृताँल्लोका**नीशत** ईष्टे । यश्चैक एव जगत उद्भवनमुद्भव उत्पादस्तस्मिन् सम्भवनं सम्भव एकीभावः । लय इति यावत् । तस्मिश्चेष्टे । ये ये पुरुषा एतत् परमात्मनो निखिलेशितृत्वमखिलजगदुद्भवादि-कारकत्वं च विदुः एतद्विषयकज्ञानरूपमोक्षसाधनसम्पन्नास्ते **अमृताः** मुक्ताः **भवन्ति** ।। १ ।।

**एको हि रुद्रो न द्वितीयाय तस्थुः य इमान् लोकानीशत ईशनीभिः ।**
**प्रत्यङ्जनास्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः ।। २ ।।**

**प्र.** - ननु 'य एतद्विदुरमृतास्ते भवन्ति' इति पूर्वमन्त्रे सर्वलोकेश नारायणस्यैव मोक्षसाधनज्ञानविषयतया मोचकत्वमिति यदुक्तम्, तदयुक्तम् । जगत्कारणत्वेन प्रसिद्धानां ब्रह्मादीनां ज्ञानस्यैव मोक्षसाधनत्वमिति वक्तुमुचितत्वात् इत्याशंक्याह-**एको हीति** । हे

---

१. एतं विदुरिति वक्तव्ये एतद्विदुरिति नपुंसकप्रयोगात् उद्भवसम्भवनियमनकर्तुरैक्यज्ञापने नैर्भर्यं व्यज्यते ।। एतत् ऐक्यमित्यर्थः ।। (भाष्यपरिष्कारे)
२. **वागुरा** - मृगबन्धिनी, जालः, 'वागुरा मृगबन्धिनी' इत्यमरः।

**जनाः! 'सर्वलोकानीशत ईशनीभिः,** प्रत्यक्तिष्ठति इति निर्दिष्टः **विश्वा भुवनानि संसृज्य** सृष्ट्वा अन्तकाले **सञ्चुकोच** - संहृतवान्, **गोपाः** - गोप्ता रक्षिता च यः, स एक एव **रुद्रः** - संसाररुजं द्राव(द्रव)यतीति रुद्रः - संसारमोचक इत्यर्थः । **द्वितीयाय** - द्वितीयत्वाय सहायतया न केऽपि **तस्थुः** - सहायतया वा उपायान्तरतया वा केऽपि न स्थितवन्तः । मोचकोऽन्यः कोऽपि नास्ति । 'वेदाहमेतं पुरुषं महान्तं' (पु.सू.१६) इति महापुरुषं प्रस्तुत्य, 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यते' (पु.सू.१७) इति मार्गान्तर निषेधात् । अत्र रुद्रशब्दो (यौगिकः?); रूढ्यर्थापेक्षया प्रकृतौपयिकस्य मानान्तरा विरुद्धस्य संसारमोचकत्वलक्षणयौगिकार्थस्य मनसि विपरिवर्तमानस्य शारीरकापशूद्रन्यायेन बलवत्वात् । अस्याश्चोपनिषदो भगवत्परत्वस्य साधयिष्यमाणत्वाच्च नात्र चोद्यावकाशः ।। २ ।।

**आ.भा. -** अथ सृष्टिस्थितिप्रलयकर्त्तुर्मोक्षप्रदस्यैक्यमभिधत्ते - **एकः** इति । हे जनाः य **इमानखिलाँल्लोकानीशनीभिः** ईशनसमर्थाभिर्ज्ञानबलक्रियाशक्तिभि**रीशत इष्टे प्रत्यङ् तिष्ठति** स स्वभक्तानां संसाररुजं द्रावयति नरकादिपातेनाभक्तान् रोदयति इति वा **रुद्रः** 'ओं यो वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दात्मा ये चैकादश रुद्रा भूर्भूवः स्वस्तस्मै वै नमो नमः' ।। (रामोत्तरतापिनी)

'दशग्रीवहरं रुद्रं केशवं केशिमर्दनम् ।
वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम्" ।। (रामस्तव. ४५)
ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा ।
आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन ।। (रामस्त.६९)
'सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुङ्गव? ।
वसवोऽष्टौ त्रयः काला रुद्रा एकादश स्मृताः' ।। (रामस्तवराज ७२)

इत्यादिनिगमागमवचनप्रामाण्यात् रुद्रपदवाच्यो सर्वेश्वरः श्रीराम एक एव हि विश्वाऽखिलानि भुवनानि **संसृज्य** सृष्ट्वा **गोपा** गोप्ता **सन् अन्तकाले** - प्रलयकाले **सञ्चुकोच** संहृतवान् । (तस्य) **द्वितीयाय** द्वितीयत्वाय सहायरूपेण केचिदपि न तस्थुः न स्थितवन्तः । रुद्रपदवाच्यः सर्वेश्वर एकः श्रीराम एव सृष्टिस्थितिलयमोक्षप्रदानादिकार्याणि करोतीत्यर्थः । अत्र रुद्रपदमुद्देश्यसमर्पकमेव न त्वेकोद्देशेन रुद्रत्वविधानसमर्पकं **न द्वितीयाय तस्थुः** इत्यनेकतापक्षं व्युदस्यैकत्वपरताया स्पष्टमुल्लेखात् । उद्देश्यश्च प्रकृतः सर्वेश्वरोऽमृतपदवाच्य-मोक्षसाधनज्ञानविषयो भगवान् श्रीराम एव । रूढ्यर्थापेक्षया संसारमोचकत्वरूपो यौगिकार्थ एव बलीयानत्र रुद्रशब्दस्य प्रकृतोपयोगित्वात् । प्रकृतश्चात्र 'य एतद्विदुरमृतास्ते

भवन्ति' इति मोक्षसाधनज्ञानविषय एव । स च भगवान् श्रीराम एव । 'ओं यो वै श्रीरामचन्द्रः स भगवान् यश्च तारकं ब्रह्म भूर्भुवः स्वस्तस्मै वै नमो नमः (रामोत्तरतापिनी) 'तमेव विदित्वातिमृत्युमेति' इत्यादिषु श्रुतिषु 'भवाब्धिपोतं भरताग्रजं तं भक्तप्रियं भानुकुलप्रदीपम् । भूतत्रिनाथं भुवनाधिपत्यं भजामि रामं भवरोगवैद्यम्' ।। (रामस्तवं) इत्यादिष्वागमवाक्येषु च भगवतः श्रीरामस्यैव तारकब्रह्मत्वेन मोक्षसाधनविषयत्वेन भवाब्धिपोतत्वेन भवरोगवैद्यत्वेन चाभिधानादत एव दुर्वादध्वान्तमार्ताण्डैराचार्यवर्यैर्भगवद्भिः श्रीराघवानन्दार्यैरप्यभिहितं 'धर्मार्थकाममोक्षाख्यपुरुषार्थप्रदायिने । अद्वितीयवदन्याय राघवेन्द्राय मङ्गलम्' ।। (श्रीराघवेन्द्रमङ्गलमाला) इति । रूढ्यर्थमपहाय रुद्रशब्दस्य यौगिकार्थ एवाश्रितः 'नमस्ते रुद्रमन्यवे उतो त इषवे नमः । बाहुभ्यामुत ते नमः' । इति मन्त्रस्य महीधरभाष्येऽपि । तथाहि - नम इति । रुत् दुःखं द्रावयतीति रुद्रः । यद्वा 'रु गतौ' (धा.पा.१२३५) । ये गत्यर्थास्ते ज्ञानार्थाः । रवणं रुद् ज्ञानम् । भावे क्विप् । तुगागमः । रुद् ज्ञानं राति ददातीति रुद्रो ज्ञानप्रदः । यद्वा पापिनो नरान् दुःखभोगेन रोदयतीति रुद्रः । हे रुद्र ! ते तव मन्यवे क्रोधाय नमो नमस्कारोऽस्तु । उतोऽपि च ते तव इषवे बाणाय नमः । उतापि च ते तव बाहुभ्यां नमः । तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः । इति । बाहुभ्याम् इति द्विवचनान्तबाहुशब्दप्रयोगाद् द्विभुजो भगवान् श्रीराम एव रुद्रशब्दवाच्योऽत्र न तु चतुर्भुजः पञ्चवक्त्रो नीलकण्ठः शिव इति ।। २ ।।

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां नमति संपतत्रैः द्यावापृथिवी जनयन् देव एकः[१] ।। ३ ।।**

**प्र. - विश्वत** इति । 'अनेकबाहूदरवक्त्रनेत्रम्' (भ.गी.११-१६) इत्युक्तरीत्या अनन्तनयनाननपाणिपादादियुक्तनित्यदिव्यविग्रहयुक्तः असहाय एव द्युपृथिव्यादिसर्वप्रपञ्च (वि) निर्माता जीवान् **बाहुभ्यां पतत्र**शब्दितैः पद्भिश्च **संन(संध)मति** संयोजयति । करणकलेबरसंयोगं करोतीत्यर्थः । सर्वेषां शरीरेन्द्रियसंबंन्धं कुर्वन् स्वयमनन्याधीनानन्त-शरीरेन्द्रियवान् इत्यर्थः ।। ३ ।।

**आ.भा. -** अथ सर्वजगद्धेतोः सर्वेश्वरस्य भगवतः श्रीरामस्यासहायत्वेऽपि सर्वप्रपञ्चनिर्माणक्षमनित्यदिव्यविग्रहवत्वमभिधत्ते - **विश्वतः** इति । विश्वतोऽभितश्चक्षुर्नेत्रं

---

१. प्रसिद्धोऽयं मन्त्रः ऋग्वेदे (१०-८१-३) वाजसनेयसंहितायां (१७-१९) अथर्ववेदे (१३-३-२६), तैत्तिरीयसंहितायां (४-६-२) तैत्तिरीयारण्यके च पठ्यते ।।

यस्य सः । अनन्तचक्षुरित्यर्थः । एवं विश्वतोऽभितोमुखानि सन्ति यस्य सः । अनन्तमुख इत्यर्थः । **विश्वतो बाहुः** - अनन्तबाहुरित्यर्थः । **विश्वतस्पाद्** - अनन्तपादित्यर्थः । 'सहस्रशीर्षा पुरुषः' (पु.सू.१) 'अनेकबाहूदरवक्त्रनेत्रम्' (भ.गी.११-१६) इत्याद्युक्त - प्रकारेणानन्याधीनानन्तनयनादिविशिष्टदिव्यविग्रहशाली यः पूर्वोक्तो रुद्रपदवाच्योऽसहाय एव सर्वविधायकः सर्वेश्वर श्रीरामः स एवैकः 'भावान्नारायणो देवः' (रामायणं) 'श्रीरामचन्द्रं हरिमादिदेवम्' (सनत्कुमारसंहिता) इत्यादिवचनप्रामाण्याद् दीव्यतीति देवः क्रीडाकर्त्ता द्युतिमांश्च **द्यावाभूमी** द्युपृथिव्युपलक्षितमखिलं प्रपञ्चं सञ्जनयन्नुत्पादयञ्जीवान् **बाहुभ्यां पतत्रैः** पतत्रशब्दवाच्यपद्भिश्च **सं धमति** संयोजयति । कर्मानुसृत्य **सर्वेषां** जीवानां बाहुपतत्रोपलक्षितशरीरेन्द्रियसम्बन्धं विदधातीत्यर्थः ।। ३ ।।

**यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।**
**हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ।। ४ ।।**

**प्र.** - परमात्मोपलब्धिप्रार्थनामन्त्रमाह - **यो देवानामिति** । 'यान्येतानि देवत्रा क्षत्राणि, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' (बृ.उ.३-४-११) इति बृहदारण्यकोक्तरीत्या इन्द्रवरुणरुद्रादीनामुद्भवः उद्भवति अस्मात् **इत्युद्भवः । प्रकर्षेण** भवत्यस्मादिति **प्रभवः** । प्रकर्षेण भवनं देवाधिपतित्वादिरूपेणास्य प्रभवनम् । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (भ.गी.९-२४) इति कर्मफलदायित्वलक्षणप्रभुत्वस्य **भगवद्धर्मत्वेन** प्रजापतिपशुपतित्वादिप्रापकत्वलक्षणस्य प्रभवनस्य भगवदधीनत्वादिति **द्रष्टव्यम्** । **विश्वाधिकः ।** 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ.गी.१०-४२) इत्युक्तरीत्या **विश्वस्य** सर्वस्यापि तदेकदेशैकदेशतया तस्य विश्वाधिकत्वम् । संसाररुजां द्रावकतया रुद्रत्वम्, निरतिशयसार्वज्ञ्यादियुक्ततया महर्षित्वञ्च भगवतो युज्यते । एवम्भूतो **भगवान्**, 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूपः,' (महो.१-४) 'तत्र ब्रह्मा चतुर्मुखोऽजायत नारायणाद्ब्रह्माजायत' (ना.उ.१) इत्युक्तरीत्या **हिरण्यगर्भं** सर्वेषां देवानां सृष्टेः प्राक् **जनयामास । सः** - देवः परमात्मविषयतया **शुभया** बुद्ध्या योजयतु इत्यर्थः ।। ४ ।।

**आ.भा.** - अथ निखिलकारणस्य परब्रह्मणो भगवतः श्रीरामस्यैकतां मोक्षदातृताञ्चाभिधाय मोक्षहेतुभूतां बुद्धिं च तत एव याचते - **य** इत्यादिना । **यः** परमात्मा भगवान् श्रीरामो **देवानां** ब्रह्मादीनां सर्वेषाममराणामुद्भवत्यस्मादि**त्युद्भवः** कारणमस्ति । उक्तञ्च रामायणे - 'प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः' (रा.यु.कां.१७-१६) पद्मपुराणे भगवन्तं श्रीरामं प्रति श्रीपरशुरामवाक्यम् -

राम राम महाबाहो न वेद्मि त्वां सनातनम् ।।
जानाम्यद्यैव काकुस्थ तव वीर्यगुणादिभिः ।।
त्वमादिपुरुषः साक्षात् परं ब्रह्म परोऽव्ययः ।।
त्वमनन्तो महाविष्णुर्वासुदेवः परात्परः ।
नारायणस्त्वमीशस्त्वमीश्वरस्त्वं त्रयीमयः ।।
त्वं कालस्त्वं जगत् सर्वमकाराख्यस्त्वमेव च ।
स्रष्टा धाता च संहर्त्ता त्वमेव पुरुषोत्तमः ।।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्रयीमयः ।
व्यक्ताव्यक्तस्वरूपस्त्वं गुणभृन्निर्गुणः परः ।।
स्तोतुं च त्वामशक्तोऽहं वेदानामप्यगोचरम् ।
यच्चापलत्वं कृतवाँस्त्वां युयुत्सुतया प्रभो? ।।
तत् क्षन्तव्यं त्वया नाथ कृपया केवलेन तु ।
तव शक्त्या नृपान् सर्वान् जित्वा दत्त्वा महीं द्विजे ।।
त्वत्प्रसादवशादेव शान्तिमाप्नोति नैष्ठिकीम् ।

रामायणेऽपि -

त्रयाणामपि लोकानामादिकर्त्ता स्वयं प्रभुः ।
ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति तथा कामानिह लोके परत्र च ।। (रा.बा.कां.१९-११)

श्रीरामस्तवराजेऽपि -

देवतिर्यङ्मनुष्याणां दानवानां तथैव च ।। ७४ ।।
माता पिता तथा भ्राता त्वमेव रघुवल्लभा ।
सर्वेषां त्वं परब्रह्म त्वन्मयं सर्वमेव हि ।। ७५ ।।

श्रीरामतापिनी श्रुतिश्च -

सीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्त ।
स्थितानि न प्रहितान्येव तेषु ततो रामो मानवो माययाऽधात् ।।

अत्र धातूनामनेकार्थत्वात् पूज्यावित्यस्य ज्ञेयावित्यर्थो बोध्यः । 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै.उ.२-६) इति श्रुतिप्रामाण्यान्मानवो नूतनप्रभावान् भगवान् श्रीरामः 'माया दम्भे कृपायां चे'ति विश्वकोशवचनबलान्मायया कृपया स्वसृष्टेषु चतुर्दशसंख्याकेषु भुवनेष्वधादन्तर्यामितया प्राविशत् । प्रभवश्च प्रकर्षेण देवाधिपत्यशाली 'भूतत्रिनाथं

भुवनाधिपत्यं भजामि रामं भवरोगवैद्यम्' ।। ५७ ।। इति श्रीरामस्तवराजवनचनप्रामाण्यात् । रामायणेऽपि - 'इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः' । (रा.यु.कां.११७-१६) **विश्वाधिकः** 'इति रामपदेनासौ परब्रह्माभिधीयते' ।। (रामतापिनी) इति श्रुतिप्रामाण्यात् परब्रह्मतया विश्वस्मादधिकः । निरतिशयबृहत्वशालीत्यर्थः । अत एवोक्तं गीतायां 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ.गी.१०-४२) इति । **रुद्रो** रुद्रशब्दवाच्यः । भगवतः श्रीरामस्य रुद्रशब्दवाच्यत्वं तु द्वितीयमन्त्रस्य भाष्ये सुनिरूपितम् । निरतिशयसर्वज्ञताशालित्वान्महर्षिश्च भगवान् श्रीरामो पूर्वं सृष्ट्यादौ हिरण्यगर्भं लोककर्त्तारं ब्रह्माणं जनयामासोत्पादयामास । 'द्विर्बद्धं सुबद्धं भवतीति' न्यायेन सुदृढं करिष्यति ब्रह्मणो भगवतोत्पाद्यमानत्वमग्रेऽपि 'यो ब्रह्माणं विदधाति पूर्वम्' (श्वे.उ.६-१८) इत्येवंरूपेणाभिधास्यन्ती भगवती श्रुतिः । 'इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत्' । (रा.यु.कां.११७-१७) इत्येवंरूपेण नाभिकमलोद्भवेन ब्रह्मणा भगवतः श्रीरामस्य पद्मनाभत्वमुदीरयता स्वस्य श्रीरामादुत्पन्नत्वमभिहितमेव ।

'संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि ।
महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः' ।। (रा.उ.कां.१०४-४)

इत्येवंरूपेण ब्रह्मणा भगवतः श्रीरामस्य प्रलयकर्त्तृत्वं क्षीरार्णवशायिरूपधारित्वं स्वस्य जनकत्वञ्च स्पष्टमेव व्याहृतम् । स हिरण्यगर्भजनको भगवान् श्रीरामो नोऽस्मान् मोक्षमभिकांक्षमाणान् **शुभया** सर्वविधदुःखनिवारकत्वप्रयुक्तसर्वोत्कर्षशालिन्या मोक्षहेतुभूतया परमात्मविषयिण्या बुद्ध्या संयोजयतु ।। ४ ।।

**या ते रुद्र! शिवा तनूरघोरा पापकाशिनी ।**
**तया न स्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ।। ५ ।।**

**प्र.** - 'अदृष्टपूर्वं हषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास' ।। (भ.गी.११-४५)

इत्युक्तरीत्या सौम्यदिव्यमङ्गलविग्रहविशिष्टतया भगवत्प्रकाशप्रार्थनामन्वमाह - **या ते रुद्रेति** । हे रुद्र! संसाररुग्द्रावक! प्रसिद्धरुद्रव्यावर्तनाय तं विशिनष्टि-**गिरिशन्तेति** । गिरिशं तनोतीति **गिरिशन्तः** । रुद्रस्य स्रष्टा इत्यर्थः । **या शिवा अघोरा** च **पापकाशिनी** पापकमशितुं शीलमस्या इति पापकाशिनी पापदाहिका वैष्णवी सात्त्विकी तनुः तादृश्या **शन्तमया** - सुखप्रदया अत्यन्तानुकूलया **तन्वा** - विग्रहेण **अभिचाकशीहि** - प्रकाशस्व इत्यर्थः ।। ५ ।।

**आ.भा. -** अथ पूर्वोक्ता मोक्षहेतुभूता शुभा बुद्धिः किंविषयिणीत्यवगमयति - **येति ।** हे रुद्र! दुःखद्रावयितृत्वेन ज्ञानप्रदत्वेन पापिजनरोदयितृत्वेन वा रुद्रपदवाच्य भगवान् श्रीराम! यद्वा 'जगत्सर्वं शरीरं ते' (रा.यु.कां.११७-२५) इति रामायणोक्तरीत्या शरीरत्वेन रुद्रविशिष्टतया रुद्रानतिरिक्त भगवन् श्रीराम! अत एवोक्तं सनत्कुमारंहितायाम् -

'ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा ।
आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन' इति ।
त्रयाणामपि लोकानामादिकर्त्ता स्वयं प्रभुः ।
रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः ।
अश्विनौ चापि कर्णौ ते सूर्याचन्द्रमसौ दृशौ' ।। इति । न चैवं विशेषणविशेष्यभूतयोः रुद्ररामयोरद्वैतत्वं स्यादिति वाच्यम्, विशेषणविशेष्ययोस्तयोर्दण्डपुरुषयोरिव स्वरूपधर्मप्रयुक्तभेदस्य निरूपयितुं शक्यत्वात् । अथ रुद्रशब्दस्येह न रुद्रवाचकत्वं किन्तु परब्रह्म श्रीरामवाच्यत्वमेव इत्यभिप्रायं व्यञ्जयितुं विशेषणान्तरमाह - **गिरिशन्तेति ।** गिरौ शेत इति गिरिशः कैलासशायी शङ्करः । गिरिशं तनोतीति गिरिशन्तो रुद्रसर्जकस्तत्सम्बुद्धौ हे **गिरिशन्त** हे शिवसर्जक भगवन् श्रीराम! ते निरुक्तविशेषण-विशिष्टस्य तव या 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः' (छां.उ.१-१-६)

'रामः कमलपत्राक्षः पूर्णचन्द्रनिभाननः ।
रूपदाक्षिण्यसम्पन्नः प्रसूतो जनकात्मजे' ।। (रा.अ.कां.६६-८)
'विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः ।
गूढजत्रुः सुताम्राक्षो रामो नाम जनैः श्रुतः' । (रा.यु.कां.३५-१५)

इत्यादिश्रुतिस्मृतिविश्रुता **अघोरा** घोरत्वविहीना । अभयङ्करीत्यर्थः । **पापकाशिनी** पापकाशनशीला । दर्शनात् पापनाशिनीत्यर्थः । अपापकाशिनीति च्छेदे तु पुण्यप्रकाशनशीलेत्यर्थोऽवगन्तव्यः । तनू देहस्तया **शन्तमया** सुखप्रदायिन्या **तनुवा** देहेनाभिचकाशीहि । तादृग्देहविशिष्टरूपेण त्वं प्रकाशितो भवेत्यर्थः ।। ५ ।।

**यामिषुं गिरशन्त हस्ते बिभर्ष्यस्तवे ।**
**शिवां गिरित्र! तां कुरु मा हिंसीः पुरुषं जगत् ।। ६ ।।**

**प्र. - यामिषुमिति । गिरित्र । गीः -** वेदान्तः । तत्र त्रायते पाल्यते प्रतिपाद्यते इति वेदान्तप्रतिपाद्यत्वं **गिरित्रशब्दार्थः । गिरिशन्त** इत्यस्य पूर्ववदर्थः । हे **गिरित्र! गिरिशन्त! ते हस्ते शिवां यामिषुं बिभर्षि** - यत् आयुधं बिभर्षीत्यर्थः । तामिषुम्

**अस्तवे** - 'असु क्षेपे' (धा.पा.१२१०) मद्ब्रह्मज्ञानविरोधिक्षेपाय कुरु । गच्छतीति **जगत्,** संसारपथचङ्क्रम्यमाणं पुरुषं **मा हिंसीः** - संसारान्धकूपपतितं मा कार्षीरित्यर्थः ।। ६ ।।

**आ.भा.-** अथ दिव्यविग्रहवद् दिव्यायुधध्यायिनां दण्डपरिहारपूर्वक-परिपालनार्थमभ्यर्थयति वेदान्तवेद्यं बाणधारकं भगवन्तं श्रीरामम् - **यामिति ।** हे **गिरिशन्त!** हे रुद्रसर्जक! भगवान् श्रीराम! त्वं **शिवां** दिव्यां यामिषुममोघं बाणं **बिभर्षि** धारयसि ।

'सर्वशास्त्रार्थतत्त्वज्ञमानन्दकरसुन्दरम् ।
कौशल्यानन्दनं रामं धनुर्बाणधरं हरिम् ।।
एवं सञ्चिन्तयन् विष्णुं यज्ज्योतिरमलं शिवम् ।
प्रहृष्टमनसो भूत्वा मुनिवर्यः स नारदः' ।। (सनत्कुमारसंहिता)

इत्यादिवचनप्रामाण्याद् हे श्रीराम यममोघं दिव्यं शरं त्वं दधासि । हे **गिरित्र!** गिरि भगवन्निश्वासरूपे वेदशिरोभागे वेदान्ते त्रायते प्रतिपाद्यते इति गिरित्रो वेदान्त-प्रतिपाद्यस्तत्संबुद्धौ हे गिरित्र!

'वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम् ।
अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात् ।।

इत्याद्यागमवचनप्रामाण्याद् हे वेदान्तवेद्य श्रीराम! तां स्वहस्तस्थितां **तामिषुं** शरम् **अस्तवे** त्वत्प्राप्त्यवरोधकक्षेपणाय **कुरु** विधेहि गच्छतीति व्युत्पत्त्या **जगत्** संसारमार्गे पुनः पुनरतिशयेन वा भ्राम्यमाणं **पुरुषं** जनं **मा हिंसीः** संसारान्धकूपापन्नं माकार्षीरित्यर्थः ।। ६ ।।

**ततः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।**
**विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वा अमृता भवन्ति ।। ७ ।।**

**प्र. - ततः परमिति ।** उक्तप्रकारेण तत्प्रार्थनानन्तरम् **बृहन्तं** - निरतिशयबृहत्वाश्रयम्, अत एव परं, **यथानिकायं** - मशकमातङ्गादिशरीरानुरूप्येण **सर्वभूतेषु** अनुभूतेषु अनुप्रविश्य अन्तर्यामितया वर्तमानम्; **विश्वं** व्याप्य स्थितं **तमीश्वरं** **ज्ञात्वा** मुक्ता **भवन्ति** इत्यर्थः ।। ७ ।।

**आ.भा.-** अथ पूर्वाभिहितप्रार्थनैव मोक्षजनकध्यानसम्पादिकेति बोधयति - **ततः** इति । **ततः** परम् उक्तविधप्रार्थनाकरणानन्तरं **बृहन्तं** निरतिशयबृहत्वविशिष्टमत एव **परं ब्रह्म यथानिकायं** पिपीलिकामातङ्गसूक्ष्मस्थूलशरीरानुरूपेण **सर्वभूतेषु** सर्वप्राणिषु **गूढम्** अन्तर्यामितया स्थितम् । सर्वस्यान्तर्व्याप्तमित्यर्थः । विश्वस्याखिलस्यैकं मुख्यं

**परिवेष्टितारं** परिवेष्टनविधातारम् । सर्वस्य बहिर्व्याप्तमित्यर्थः । **तं** सर्वस्यान्तर्बहिर्व्यापकम् 'तस्मिन्नेव श्रिताः सर्वे तदु नात्येति कश्चन' (क.उ.५-८)

'सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम् ।
सर्वकारणकर्तारं निदानं प्रकृतेः परम्' ।।

इत्यादि निगमागमनिचयप्रतिपादितमीशं नियन्तारं भगवन्तं श्रीरामं **ज्ञात्वा** विज्ञायः अमृताः अमृतपदमवाप्ताः । जन्ममरणशून्या इत्यर्थः । मुक्ता इति यावत् । **भवन्ति** । जना इति शेषः ।। ७ ।।

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।**
**तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।। ८ ।।**

**प्र.** - तज्ज्ञानस्य मोक्षसाधनत्वमुक्त्वा इतरस्य तन्निषेधेति - **वेदाहमेत**मिति । प्रकृतेः परस्तात् ज्योतिः महापुरुषं (ज्योतिर्मयवपुषं?) **'तमेव पुरुषं विदित्वा'** मृत्युशब्दितं संसारमतिक्रामति । **अयनाय** तत्प्राप्तये अन्यो मार्गो नास्ति । एतमर्थमहं **वेद** - जानामि । अस्मिन्नर्थे विवादो नास्तीति मुनीनां परस्परं वचनमिदम् ।। ८ ।।

**आ.भा.** - अथ पूर्वमन्त्रोक्तस्य परस्य ब्रह्मणो महापुरुषपदवाच्यतां तज्ज्ञानस्यैव मोक्षसाधनतां चाभिधत्ते - **वेदेति । अहमेतं** पूर्वमन्त्रोक्तं **तमसः** तमश्शब्दवाच्यात् प्रकृतिमण्डलात् **परस्तात्** परात्परसाकेतलोके स्थितम् आदित्यवर्णं निरतिशयोज्ज्वल्यादि-गुणिशिष्टदिव्यमङ्गलविग्रहविशिष्टं **महान्तं** सर्वथा सर्वतोऽधिकमहत्त्वशालिनं पुरुषं भगवन्तं श्रीरामं वेद अवगच्छामि सर्वेश्वरश्रीरामस्य महापुरुषपदवाच्यत्वञ्च -
इति रामपदेनासौ परंब्रह्माभिधीयते । (श्रीरामतापिनी)

'अमोघं देव वीर्यं ते नते मोघाः पराक्रमाः ।
अमोघं दर्शनं राम अमोघस्तव संस्तवः ।। ३१ ।।
अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि ।। ३२ ।।
ये त्वां देव ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति तथा कामानिह लोके परत्र च' ।। ३३ ।। (वाल्मीकिरामायणे ६ । ११७)
'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' ।। (भ.गी.१५-१७)
'त्यक्त्वा सुदुस्त्यजसुरेप्सितराजलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद् वन्दे महापुरुष? ते चरणारविन्दम्' ।।
(श्रीमद्भागवत ११ स्कन्द)

आदिपुरुषः परमपुरुषो महापुरुष एव च ।
पुण्योदयो दयासारः पुराणपुरषोत्तमः ।
'स्मितवक्त्रो मितभाषी पूर्वभाषी च राघवः ।। (पद्मपुराण)
नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात्'।। ६५ ।।
'परात्परं यत्परमं पवित्रं नमामि रामं महतो महान्तम्' ।। (६८)
'त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तमः ।
त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किंचन' ।। ७६ ।। **(श्रीरामस्तवराज) इत्यादौ** व्यक्तम् । 'वेदाहमेतमिति' (पु.सू.१) पुरुषसूक्तानुवादरूपः । **पुरुषसूक्तेन तु 'सहस्राक्षः** सहस्रपात्' (पु.सू.१) इत्यादिरूपेण महतः पुरुषस्य सहस्राक्षत्वादयः प्रतिपादिताः । ते च सहस्राक्षत्वादयो भगवतो श्रीरामस्य वेदोपबृंहणभूते रामायणे **'सहस्रचरणः** श्रीमाञ्शतशीर्षः सहस्रदृक्' । (रा.यु.कां.११७-२१) इत्येवंरूपेण प्रतिपादिता **अतोऽत्र** महापुरुषपदवाच्यत्वं भगवतो श्रीरामस्यैवास्ति । अत एवोक्तं **स्कन्दपुराणे - 'यथा** पुरुषशब्दोऽयं वासुदेवे प्रतिष्ठितः' । इति । **तमेव** महापुरुषपदवाच्यं परं ब्रह्म भगवन्तं श्रीराममेव **विदित्वा** - अवगम्य । उपास्येत्यर्थः । **मृत्युं** - मृत्युपदवाच्यं संसारम् अत्येति अक्रामति । **अयनाय** भगवतः श्रीरामस्यावाप्तये । मोक्षाख्यपरमपददिव्यधाम श्रीसाकेतप्राप्तय इत्यर्थः । अन्य इतरः पन्था मार्गो न विद्यते । नास्तीत्यर्थः । तद्गमनप्रकारश्च जगदाचार्य श्रीरामेश्वरानन्दाचार्यप्रसादित श्रीरामप्राप्तिपद्धतौ, प्रस्फुटम् । **अत एवोक्तं** श्रीरामस्तवराजे - 'त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किञ्चन' ।। **(सनत्कुमारसंहिता)** इति ।। ८ ।।

**[नित्यनिरामयविग्रहत्वम् (परमात्मनः उत्कृष्टत्वम्)]**

**यस्मात्परं नापरमस्ति किञ्चित् -**
**यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठत्येक -**
**स्तेनेदं पूर्णं पुरुषेण सर्वम् ।। ९ ।।**

**प्र.** - ननु आत्मज्ञानस्यैव 'तरति शोकमात्मवित्' (छां.उ.७-१-३) इति मोक्षहेतुत्वमुच्यते । कथमादित्यवर्णविग्रहपुरुषज्ञानस्येत्याशङ्क्य अस्यैव पुरुषस्य व्यापकत्वात् आत्मत्वमपि तस्यैवेत्याह - **यस्मादिति** । 'तथान्यप्रतिषेधात्' (ब्र.सू.३-२-३५) इति सूत्रे,

यस्मादपरं परं नास्ति । केनापि प्रकारेण उत्कृष्टं नास्तीत्यर्थः । इति भाषितम् । व्यासार्यैश्च, यस्मादित्यस्य परमित्यनेनान्वयोऽस्तु । यस्मादुत्कृष्टं नास्तीत्यर्थः । इत्यशङ्क्य, तथा सति अपरम् इत्यस्य वैयर्थ्यप्रसङ्गात् । न च परञ्चापरञ्च नास्तीति उत्कृष्टापकृष्ट-वस्तुनिषेधकत्वं शक्यशङ्कम् - नञ् आवृत्तिप्रसङ्गात् । अतो यस्मादित्यस्यापर-मित्यनेनैवान्वयः । यस्मादन्यत् सर्वोत्कृष्टं नास्तीत्यर्थाश्रयणे तदन्यस्य उत्कृष्टस्य वस्तुन एवाभावात् समाभ्यधिकनिषेधः फलति इति वर्णितम् । यदपेक्षया अतिशयेनान्तःप्रवेशयोग्यं वस्तु नास्ति, यस्माञ्चाधिकं विवृद्धं किमपि वस्तु नास्ति; यश्चाप्राकृते लोके अवाप्तसमस्तकामतया ब्रह्मादिकमपि तृणीकृत्य **वृक्ष इव** अप्रणतस्वभाव**स्तिष्ठति**; तेन,

'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने' ।। (पाद्मोत्तर ६-२५४-६६) इत्युक्तप्रकारेण पुरुषशब्दितेन भगवता वासुदेवेनेदं सर्वं व्याप्तमित्यर्थः । अनेन, जीवाम केन? इति चिन्ताया निस्तारो दर्शितः । **पूर्ण**[1]मिति व्याप्त्या आत्मात्वे कथिते देहभूतस्य जीववर्गस्य तदधीनजीवनत्वमुक्तं भवति ।। ९ ।।

**आ.भा.** - अथात्मज्ञानस्य मोक्षहेतुतापादिकायाः 'तरति शोकमात्मविद्' (छां.उ.७-१-३) इत्येतस्याः श्रुतेरविरोधमापादयितुं व्यापकत्वादादित्यवर्णस्य पुरुषस्यात्मत्वमापादयति-**यस्मादिति** । 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे.उ.६-८) 'न त्वत्समश्चाभ्यधिकः कुतोऽन्यः' (भ.गी.११-४३) 'नेदं यशो रघुपते सुरयाञ्चयात्त लीलातनोरधिकसाम्यविमुक्तधाम्नः' । 'रक्षोवधो जलधिबन्धनमस्त्रपूगैः' 'किं तस्य शत्रुहनने कपयः सहायाः' इत्यादि श्रुतिस्मृतिभ्यां परमपुरुषसमाधिकनिषेधाद् यस्मादपरमन्यत् परमुत्कृष्टं **किंचिन्नास्ति** यस्माद् यदपेक्षाऽतिसूक्ष्मत्वात् कश्चिदणीयः प्रवेशयोग्यं सर्वव्यापित्वात् **ज्यायो**ऽधिकं विवृद्धं वस्तु किञ्चिदपि नास्ति । कश्चिदिति छान्दसो लिङ्गव्यत्ययः । अवाप्तसमस्तकामत्वाद् ब्रह्मादिकमपि तृणाय मन्यमानो यश्च दिवि नित्यधामाख्येऽप्राकृते लोके **वृक्ष इव** तरुरिव स्तब्धो अप्रणतस्वभावविशिष्ट एको मुख्यः संस्तिष्ठति । अथ 'जीवाम केन' इति चिन्तामपाकर्त्तुमाह - **तेन** । **तेन** पुरुषेण नियमनान्तः

---

१. पूर्णं पुरुषेण सर्वमिति पुरुषशब्दव्युत्पत्तिरपि दर्शिता । आदित्यवर्णविग्रहरूपपुरुषाकारत्वमपि तस्यैव । 'पूस्संज्ञे तु पुरे तस्मिन् शयनात् पुरुषो हरिः' इति सर्वव्यष्टिशरीरनिविष्टतया, स यत् पूर्वोऽस्मात् सर्वस्मात्, 'सर्वान् पाप्मन औषत् तस्मात् पुरुषः' इति सर्वपूर्ववर्तित्व-सर्वपाप्मप्रदाहकत्व-रूपकारणत्वमोक्षप्रदत्वशालितया च पुरुषत्वमपि तस्यैवेति ।। अयं मन्त्रः मुण्डके, तैत्तिरीयेऽपि वर्तते । (भाष्यपरिष्कारे)

प्रविष्टेनादित्यवर्णमहापुरुषपदवाच्येन भगवता श्रीरामेणेदं सर्वं पूर्णं व्याप्तम् । पूर्णमिति व्याप्त्या श्रीरामस्य सर्वात्मत्वाद् 'यस्यात्मा शरीरम्' (बृ.उ.५-७-२६) इतिश्रुतेः देहभूतो जीववर्गः स्वात्मभूतेन श्रीरामेणैव जीवतीति भावः ।। ९ ।।

**ततो यदुत्तरतरं तदरूपमनामयम् ।**
**य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियंति ।। १० ।।**

**प्र.** - यस्माद्धेतोः पुरुषापेक्षयोत्कृष्टं वा समं वा नास्ति । तस्मात् तदेव **सर्वोत्तरं** कर्मकृतरूपरहितं तत्कृतामयशब्दितदुःखशून्यञ्च । तज्ज्ञानमेव मोक्षसाधनमित्युपसंहरति- **ततो यदि**ति । 'तथान्यप्रतिषेधात्' (ब्र.सू.३-२-३५) इति सूत्रे, **ततो यदुत्तरमि**ति पूर्वनिर्दिष्टात् पुरुषात् अधिकं वस्तु न प्रतिपाद्यते इत्युक्त्वा तर्हि, **ततो यदुत्तरमि**ति किमुच्यते इति परिचोद्य, पूर्वत्र 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे.उ.३-८) इति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनम्, नाऽन्योऽमृतत्वस्य पन्था इत्युपदिश्य, तदुपपादनाय, 'यस्मात् परन्नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.उ.३-९) इति पुरुषस्य परत्वं तद्व्यतिरिक्तस्य परत्वासम्भवञ्च प्रतिपाद्य, 'ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति' (श्वे.उ.३-२) इति पूर्वोक्तमर्थं हेतुतो निमगयति । **यत् उत्तरतरं** पुरुषतत्त्वं, **तदेवारूपमनामयं** यतः, **ततो ये** एतत् पुरुषतत्त्वं विदुः, **त एवामृता भवन्ति; अथेतरे दुःखमेवापियन्ति** इति भाषितम् । अत्र **ततश्शब्दः** पूर्वोक्तहेतूपसंहारार्थः । न तु पूर्वप्रतिपादितपुरुषस्य प्रतिपिपादयिषितवस्त्वन्तरावधित्वप्रतिपादनपर इति द्रष्टव्यम् । केचिदाचार्याः, 'तेनेदं पूर्णमि'ति पूर्ववाक्ये **सर्वमिद**मिति प्रथमान्तनिर्दिष्टतया प्रधानस्य जगत एव, **ततो यदुत्तरतरम्** इत्यत्र तच्छब्देन ग्रहणमित्युक्तः । तदपि युक्तमिति वेदार्थसंग्रहव्याख्यानेऽप्युक्तम् ।। १० ।।

**आ.भा.** - 'वेदाहमेतं पुरुषं महान्तम्' (श्वे.उ.३-८) इति मन्त्रे महापुरुषपदवाच्यस्य श्रीरामस्य ज्ञानमेव मोक्षसाधनं नान्यदित्युपदिष्टं तदुपपादयन् 'यस्मात् परं नापरमस्ति किञ्चित्' (श्वे.उ.३-९) इत्यनेन महापुरुषस्यैव परत्वं नान्यस्येति प्रतिपाद्य पूर्वोक्तमर्थं हेतुतो निगमयन्नाह - **ततो यदुत्तरतरमिति । यद् उत्तरतरम्** उत्कृष्टतरं महापुरुषपदवाच्यं श्रीरामतत्त्वं यतस्तदेवारूपं कर्मकृतरूपशून्यम**नामयं** दुःखशून्यं चास्ति, ततः तस्माद्धेतोर्ये एतन्महापुरुषपदवाच्यं श्रीरामतत्त्वं **विदुः उपासते तेऽमृता भवन्ति** । त एवामृता

जननमरणशून्या भवन्तीत्यर्थः । अथेति पक्षान्तरे । ये त्वेतच्छरीमतत्त्वं **न विदुस्ते दुःखमेवापियन्ति** प्राप्नुवन्ति । यद्वा 'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.उ.३-९) इति पूर्वोक्तं सर्वशब्दवाच्यं जगत् तच्छब्देन परामृश्य ततः सर्वशब्दवाच्याज्जगतो यदुत्तरतरमित्यन्वयः कर्तव्योऽन्यत् सर्वं तु पूर्ववदेव बोध्यम् ।। १० ।।

**सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।**
**सर्वव्यापी स भगवाँस्तस्मात् सर्वगतश्शिवः ।। ११ ।।**

**प्र. -** ननु 'तेनेदं पूर्णं पुरुषेण सर्वमिति' (श्वे.उ.३-९) सर्वशरीरसम्बन्धावगमात् हेयसम्बन्धोऽवर्जनीय इत्याशङ्क्याह - **सर्वानने**ति । सर्वशरीराणां तच्छरीरत्वेन **सर्वाननशीरोग्रीवत्वम्;** सर्वभूतहृदयगुहाश्रयत्वात् सर्वभूतगुहाशयत्वम् । अनेनाऽऽकारेण **सर्वव्याप्यपि** यतो **भगवान्,** (तस्मात्?) -

'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' ।। (वि.पु.६-५-७९) इति हेय-प्रतिभटत्ववाचिभगवच्छब्दार्थतया तस्य पुरुषस्य सर्वगतत्वेऽपि शिवत्वमेव ; न त्वशुभ-सम्बन्ध इति भावः ।। ११ ।।

**आ.भा. -** अथ 'तेनेदं पुरुषेण सर्वम्' (श्वे.उ.३-९) इति सर्वव्यापित्वेन महापुरुषस्य हेयसम्बन्धशङ्कामपाकरोति - **सर्वाननशिरोग्रीव** इति । यतः **स** महापुरुषः **सर्वव्यापी** ततो सर्वेषामाननानि शिरांसि ग्रीवाश्च तस्यैव सन्तीति स **सर्वाननशिरोग्रीवोऽस्ति** यद्वाऽऽनन्त्यार्थकोऽत्र सर्वशब्दस्तस्मादनन्तान्याननानि शिरांसि ग्रीवाश्च सन्ति यस्य सर्वाननशिरोग्रीवः सोऽस्ति । सर्वेषां भूतानां गुहायां हृदयलक्षणायां शेत इति सर्वभूतगुहाशयश्चापि सोऽस्ति । 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' । (क.उ.४-२-१२) 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (भ.गी.१८-६१) जगत् सर्वं शरीरं ते (रामायण ११७-२५) इत्यादिश्रुतिस्मृतयोऽत्र प्रामाण्यमुपयान्ति । महापुरुषस्य श्रीरामस्य सर्वभूतशरीरत्वसर्वभूतगुहाशयत्वसर्वव्यापित्वेषु सत्स्वप्यनामयत्वस्यासम्भवस्तु नास्ति यतो महापुरुषपदवाच्यः श्रीरामो भगवान् भगो विद्यते यस्य तादृशोऽस्ति -

'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ।।
ज्ञानशक्तिबलैश्वर्यतेजोवीर्याण्यशेषतः' ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ।।

इत्यादिवचनप्रामाण्यादैश्वर्यादयो ज्ञानादयो वा भगशब्दवाच्या बोध्याः । **यतो** महापुरुषपदवाच्यः श्रीरामस्तस्मात् सर्वगतोऽपि स शिवः शुद्धः -

'योऽसौ सर्वतनुः सर्वः सर्वनामा सनातनः ।

अलिप्तः सर्वभावेषु श्रीरामः शरणं मम' ।

इत्यागमोक्तेः सर्वविधहेयसम्बन्धविवर्जितः सोऽस्तीति भावः । तदुक्तं भगवता बादरायणेनापि, 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू. १-२-८) इति । एवं स्थिते 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' (श्वे.उ.४-३) इति श्रुतिर्जीवस्य पुण्यपापरूपकर्म-परवशत्वेन सुखदुःखोपभोगमपहतपाप्मनः परमात्मनस्तन्निवृत्तिञ्चाभिधत्ते ।। ११ ।।

**महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः ।**

**सुनिर्मलामिमां शान्तिमीशानो ज्योतिरव्ययः ।। १२ ।।**

**प्र.** - तज्ज्ञानस्यैव मोक्षसाधनत्वमित्येतत् द्रढयति - **महान्** इति । **वै**शब्दोऽवधारणे । **पुरुष एव महान् प्रभुः** - फलप्रदानसमर्थः । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (भ.गी.९-२४) इत्युक्तः (इत्यत्र?) **प्रभुः** - फलप्रदः इति भगवता भाष्यकृता व्याख्यातत्वात् प्रकृते मोक्षरूपफलस्य प्रस्तुतत्वात् महच्छब्दसमभिव्याहाराच्च महाफलरूपमोक्षप्रदः स एवेति तस्य मोक्षहेतुत्वं पूर्वोक्तं स्थिरमिति तत्र हेतुमाह - **सत्त्वस्यैष प्रवर्तक** इति ।

'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।

सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' ।। (महा.भा.मो.प.३४९-७३)

इत्युक्तरीत्या मोक्षार्थज्ञानहेतुसत्त्वगुणोन्मेषहेतुभूतकटाक्षशालितया स एव मोक्षप्रद इत्यर्थः । अत एव ज्योतीरूपनिरतिशयदीप्तियुक्तादित्य (वर्णविग्रहः?) पुरुषो **अव्ययो** भगवानेव **सुनिर्मलामिमां** - मोक्षरूपां रागाद्युपद्रवशान्तिम् **ईशानः** - ईष्टे इत्यर्थः ।। १२ ।।

**आ.भा.** - अथोक्तस्य महापुरुषस्य सत्त्वप्रवर्त्तकतामभिधत्ते - **महानिति** । अवधारणार्थको **वै** शब्दः । **महान् पुरुषः** एव **प्रभुः** फलदाने समर्थः । उक्तञ्च सनत्कुमारसंहितायाम् - 'भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम्' । (रामस्तवराजः) इति ।

'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।

सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' ।।

इत्येवंरूपेण मोक्षजनकज्ञानहेतोः **सत्त्वस्य** सत्त्वगुणस्य स्वकटाक्षेण **प्रवर्त्तकः** स एव महापुरुषोऽत एव ज्योतिरादित्यादिप्रकाशकज्योतिस्वरूपः । एतेन महापुरुषस्य

निरतिशयदीप्तिविशिष्टादित्यवर्णविग्रहत्वमावेदितं वेदितव्यम् । **अव्ययो**ऽविनाशिस्वरूपो भगवानेव **सुनिर्मलाम्** ज्ञानदुःखादिमलशून्याम् इमां मुक्तिरूपां जन्ममरणाद्युपशमात्मिकां **शान्तिमीशानः** । ईष्ट इत्यर्थः 'तं देवतानां परमं च दैवतं तमीश्वराणां परमं महेश्वरम्'

'वन्दामहे महेशानं चण्डकोदण्डखण्डनम् ।

जानकीहृदयानन्दं चन्दनं रघुनन्दनम्' ।। ५३ ।। इत्यादिश्रुतिस्मृतयोऽत्र प्रमाणतामुपयान्ति ।। १२ ।।

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा**
**सदा[1] जनानाँ हृदये सन्निविष्टः ।**
**हृदा मनीषा मनसाभिक्लृप्तो**
**य एतद्विदुरमृतास्ते भवन्ति ।। १३ ।।**

**प्र.** - तज्ज्ञानसाधनमाह - **अङ्गुष्ठमात्र** इति । सर्वेषामन्तरात्मा असौ हृदयगुहानिहितत्वनिबन्धनाङ्गुष्ठपरिमाणयुक्तः **पुरुषः हृदा** - भक्त्या **मनीषा** - धृत्या युक्तेन **मनसा अभिक्लृप्तः** - ग्राह्यः हृन्मनीषशब्दयोः भक्तिधृतिपरत्वम् 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र.सू.१-२-१) इत्यत्र व्यासार्यैः वर्णितम् । शिष्टं स्पष्टम् ।। १३ ।।

**आ.भा.** - अथोक्तस्य सर्वभूतगुहाशयस्य महापुरुषस्यांगुष्ठपरिमाणत्वमाह - **अंगुष्ठमात्र** इति । अंगुष्ठेन अंगुष्ठपरिमितहृदयेन मीयमानत्वादंगुष्ठमात्रे । **जनानां हृदये** सदान्तरात्मा **सन्निविष्टः** सम्यग् रूपेण स्थितः **पुरुषो** महापुरुषपदवाच्यो भगवान् श्रीरामः **हृदा** भक्त्या **मनीषा** धृत्या संयुतेन **मनसाऽभिक्लृप्तो** ग्रहणार्थः । **य एतद् विदुरमृतास्ते भवन्तीति** पूर्ववद् व्याख्येयम् ।। १३ ।।

**[परमपुरुषस्य महिमा]**

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।**
**स भूमिं विश्वतो वृत्वाऽत्यतिष्ठत् दशाङ्गुलम् ।। १४ ।।**

**प्र.** - अङ्गुष्ठमात्रशब्दश्रवणकृतपरिच्छेदभ्रान्तिं व्युदस्यति - **सहस्रे**ति । अनन्तशिरोनयनादिदिव्यविग्रहयुक्तविराड्रूपी सन् - **दशाङ्गुल**शब्देनावयवो लक्ष्यते ।

---

१. सदा इत्यनेन दिव्यमङ्गलविग्रहस्य उपासना काले परमाविर्भाव इति न मन्तव्यम्; किन्तु सर्वदा स्थितिरिति ज्ञाप्यते इत्येकोऽर्थः संभवति । अन्यस्तु अयं बद्धावस्थायां सदेहत्वावस्थायामेवान्तरात्मेति न, किन्तु सदैवान्तरात्मा, एवंभूतस्य जनहृदयसंनिविष्टत्वरूपहृदयावच्छिन्नत्वप्रयुक्तमङ्गुष्ठमात्रत्वमिति । अयं द्वितीय एवार्थ इह भाष्योऽभिप्रेतः ।। (भाष्यपरिष्कारः)

भूमिशब्देन ब्रह्माण्डम् पञ्चभूतपञ्चतन्मात्रारूपदशावयवयुक्तब्रह्माणमतिक्रम्य परमपदे स्थित इत्यर्थः ।

**आ.भा. -** अथ पुरुषस्याङ्गुष्ठमात्राभिधानेन प्राप्तस्य परिच्छिन्नत्वभ्रमस्य निरासं करोति - **सहस्रेति ।** अत्र सहस्रशब्द आनन्त्यार्थकः सहस्राण्यनन्तानि शिरांसि यस्य स **सहस्रशीर्षो**ऽनन्तशीर्षः । अत्र 'शीर्षन् छन्दसि' (पा.सू.६-१-६०) इत्यनेन शिरसः शीर्षन् आदेशः । एवं **सहस्राक्षः सहस्रपात्** इत्यादौ विग्रहः कार्यः । **सहस्राक्ष** इत्यत्राक्षशब्दो ज्ञानेन्द्रियमात्रोपलक्षकः । **सहस्रपात्** इत्यत्र पादशब्दः कर्मेन्द्रियमात्रोपलक्षकः । तथा च सहस्राक्षसहस्रपाच्छब्दाभ्यां ज्ञानशक्त्योरानन्त्यमुक्तं भवति । **पुरुषः** पूर्वमेवाहमिहासमिति । तत् पुरुषस्य पुरुषत्वम् इति श्रुत्या जगत्कारणरूपेण पूर्वं वर्तमानत्वात् 'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.उ.३-९) इति श्रुत्या पूर्णत्वाद्वा 'पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः । तस्मात् पुरुष इत्येष प्रोच्यते तत्त्वचिन्तकैः' ।। इति विष्णुस्मृतिवचनेन शरीराख्ये पुरे शयनाद्वा बहूनां बहुभिर्भजनाद्वा -

'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्त्तेते वासुदेवे सनातने' ।।
'सर्वलोकप्रतीत्या च पुरुषः प्रोच्यते हरिः ।
तं विना पुण्डरीकाक्षं नान्यः पुरुषशब्दभाक्' ।। (पाद्मोत्तर ६-२५४-६६)

इति पद्मपुराणवचनाद्वा -

'असौ रामो महाबाहुरतिमानुषचेष्टया ।
तेजो महत्तया वाऽपि संसारयति पूरुषम्' ।।

इत्युत्तररामायणस्थागस्त्यवचनाद्वा 'त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तमः' इति सनत्कुमारसंहितावचनप्रामाण्याद्वा **पुरुषः** पुरुषशब्दवाच्योऽनन्तज्ञानशक्तिसम्पन्नो भगवान् श्रीरामः 'अनन्तबाहूदरवक्त्रनेत्रम्' (भ.गी.११-१६) इत्यादि वचनानुसारेणानन्तशिर आद्यङ्गैर्विराड्रूपीसन् **भूमिं** भूमिशब्दवाच्यमखिलं ब्रह्माण्डं **विश्वतः** सर्वतो **वृत्वा** व्याप्य । **दशाङ्गुल**मित्यत्राङ्गुलशब्दोऽवयवार्थकः । तथा च पञ्चभूतपञ्चतन्मात्ररूपदशावयवयुक्तं निखिलं ब्रह्माण्डमतिक्रम्य परात्परे स्वधाम्नि स्थितः । तथा च पुरुषशब्दवाच्यस्य सर्वेश्वरस्य श्रीरामस्य न परिच्छिन्नत्वं किन्त्वपरिच्छिन्नत्वमेवेति बोध्यम् ।। १४ ।।

**[सर्वं पुरुषात्मकम्]**

**पुरुष एवेदँ सर्वं यद्भूतं यच्च भव्यम्[१]।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति ।। १५ ।।**

**प्र.** - यस्मात् पुरुषेण व्याप्तमिदं सर्वम्, अतः भूतभव्योपलक्षितं प्रपञ्चजातं पुरुषात्मकमेवेत्याह - **पुरुष एवेति ।** (उक्तोऽर्थः) **उताऽमृतेति ।** अत्रामृतशब्देन मुक्तिवाचिना मुक्तिस्थानं लक्ष्यते । अप्राकृतभोग्यभोगोपकरणसमृद्धं **यदमृतत्वं** परमपदम् **अन्ने** प्रकृतिप्राकृतसम्बन्धे **नातिरोहति** - नोत्पद्यते; तस्याप्यमृतत्वस्यासौ **ईशान** इत्यर्थः । अतश्चोभयविभूतिनायकत्वमुक्तं भवति ।। १५ ।।

**आ.भा.** - अथ परब्रह्मणो भगवतः श्रीरामस्योभयविभूतिस्वामित्वमभिधत्ते - **पुरुष एवं** इत्यादिना । **यद्भूतं** भूतकालिकं **यच्च भाव्यं** भविष्यत्कालिकं यच्चेदं वर्त्तमानकालिकं तत् सर्वं कृत्स्नं प्रपञ्चजातं **पुरुष एव** पुरुषशब्दवाच्यभगवच्छ्रीरामात्मकमेव । अत्र सामानाधिकरण्येन व्यपदेशः 'ग्रामोऽयं देवदत्तः' इतिवत् प्रपञ्चपुरुषयोरीशेशितव्यभावात् 'पानीयं प्राणिनां प्राणः' इतिवत् तयोः कार्यकारणभावाद्वा बोध्यः । एतेन सर्वशरीरकस्य भगवतः श्रीरामस्य लीलाविभूतीशत्वमभिहितम् । न च भगवतः प्रपञ्चशरीरकत्वे 'अशरीरं शरीरेषु' (कठ.उ.२-२२) इत्यशरीरश्रुतिविरोधिः स्यादिति वाच्यम्, अशरीरश्रुतेः कर्मकृतशरीर-निषेधकत्वांगीकारेणादोषात् । ननु भगवतः शरीरेंऽगीकृते तत्प्रयुक्तसुखदुःखभोगोऽपि प्रसज्येतेति चेन्न, ऐहिकसुखदुःखादिभोगस्य कर्मनिबन्धनत्वेनेश्वरस्य कर्माभावेन दोषाभावात् । अथ भगवतो नित्यविभूतीशत्वमभिधत्ते - **उतामृतत्वस्य** इत्यादिना । अर्थान्तरवाचक **उत**शब्दः । **अमृतत्वस्य** न विद्यते मृतत्वं यत्र तदमृतत्वं यत्र तदमृतत्वं परमधाम तस्यामृतत्वस्येशानो नियन्ता स्वामीस्यर्थः । तद्विशेषयति - **यदन्नेनातिरोहतीति । यत्** परं धाम **अन्ने** प्रकृतिप्राकृतसम्बन्धे सति **नातिरोहति** - नोत्पन्नो भवति । भक्त्या कर्मण्यश्लिष्टे विनष्टे च सत्येव भगवानमृतपदं ददातीत्यर्थः । तदुक्तं मोक्षधर्मे -

'अन्नाज्ञातस्य भूतस्य मनुष्यादेरकारणात् ।
निर्वाणदायी भवति कृपया पुरुषोत्तमः' ।। इति ।। १५ ।।

---

१. **भव्यम्** - भव्यशब्दः भव्यगेयेत्यादिना भवतीति कर्तर्येव निपातितः । तेन वर्तमानग्रहणम् । 'भूतं भव्यायोपदिश्यते' इत्यादिस्थल इव साध्यरूपार्थविवक्षया भविष्यदर्थकश्च । तेन कालत्रयवर्ति सर्वग्रहणसिद्धिः । अन्नशब्देन प्राकृतपदार्थे भोग्यताबुद्धिस्थितिपर्यन्तममृतत्वस्य दौर्लभ्यं दर्शितम् । (भाष्यपरिष्कारः)

**सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।। १६ ।।**

**प्र. - सर्वत** इति । **सर्वतः** पाणिपादादिकार्यकारि तत्तत्कार्यमुखेन सर्वमावृत्य तिष्ठतीत्यर्थः । गीताभाष्ये च 'सर्वतः पाणिपादं तत्' (भ.गी.१३-१३) इति श्लोकव्याख्यानसमये, 'परस्य ब्रह्मणः अपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकृत्त्वं श्रूयते । प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्या सर्वतः पाणिपादादिकार्यकृत्वं श्रुतिसिद्धमेव; 'निरञ्जनः परमं साम्यमुपैति' (मुं.उ.३-१-३) इति हि श्रूयते' - इति भाषितम् ।। १६ ।।

**आ.भा. -** अथ भगवतः सर्वशरीरावयवादिकार्यकारित्वं सर्वमावृत्यावस्थायित्वं चाभिधत्ते - **सर्वत** इति । **तत्** पूर्वाभिहितं पुरुषतत्त्वं **सर्वतः पाणिपादं** पाणिपादक्रियाकारकं **सर्वतश्चाक्षिशिरोमुखं** नयनाननशिरः प्रयुक्तकार्यकृन् सर्वतश्च श्रुतिमच्छ्रवणेन्द्रियजन्य-कार्यविधायकं **लोकं** जगति सर्वपदार्थजाता**वृत्य** व्याप्य तिष्ठते अवतिष्ठते । **उक्तं च** श्रौतप्रमेयचन्द्रिकायामाचार्यवर्यैः श्रीश्रियानन्दाचार्यैः -

'स्वया च प्रभया सर्वान् यतश्चावृत्य तिष्ठति ।
श्रीमद्रामस्ततश्चैव सर्वात्मत्वेन सम्मतः' ।। इति ।। १६ ।।

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् ।। १७ ।।**

**प्र. - सर्वेन्द्रियेति । सर्वेन्द्रियगुणैः -** सर्वेन्द्रियजन्यज्ञानैः **आभासः -** प्रकाशो यस्य तत् तथोक्तम् । इन्द्रियवृत्त्या विज्ञातुं समर्थमित्यर्थः । सर्वेन्द्रियवत्वमप्यैच्छिकमेव; न स्वाभाविकमित्याह - **सर्वेन्द्रियविवर्जितमिति । सर्वस्य प्रभुमिति** । प्रभुत्वं सेवाफलप्रदत्वेन, ईशानत्वं नियन्तृतया इति द्रष्टव्यम् । 'निवासः शरणं सुहृद्गतिः नारायणः' (सुबा.उ. ६ खं) इति श्रुतेः निरवधिकवात्सल्यशालि **प्राप्यञ्च** इत्यर्थः । अत्र **ईशान**शब्दस्य नपुंसकलिङ्गत्वात् न देवताविशेषप्रत्यायकत्वशङ्कावकाश इति व्यासार्यैर्वर्णितम् ।। १७ ।।

**आ.भा. - सर्वेन्द्रियेति -** सर्वेषां ज्ञानकर्मेन्द्रियत्वभेदभिन्नानामिन्द्रियाणां मनः श्रोत्राद्येकादशसंख्याकानाममुख्यप्राणानां गुणैस्तत्तदिन्द्रियजन्यज्ञानैराभासो बाह्यविषयग्रहो यस्य तत् **सर्वेन्द्रियगुणाभासं** मनःश्रोत्रादिनिखिलेन्द्रियवृत्त्याऽवबोधितुं समर्थम् । तत्र सर्वेन्द्रियशालित्वमप्यैच्छिकमेव न तु स्वाभाविकमत आह - **सर्वेन्द्रियविवर्जितमिति** ।

तज्ज्ञानस्येन्द्रियानधीनत्वादिन्द्रियवृत्तिं विनाप्यखिलमवगन्तुं समर्थमिति भावः । **सर्वस्य** अखिलस्य **प्रभुं** 'पतिं विश्वस्येति' श्रुतेः सर्वस्वामिनम् परिचर्याफलप्रदायकमित्यर्थः । **ईशानं** नियामकम् । **सर्वस्य शरणं** निखिलभूतरक्षकम् । उक्तं च श्रीमद् वाल्मीकीये रामायणे युद्धकाण्डे चतुर्मुखेन -

'इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ।
शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः' ।। (रा.यु.कां.११७-१७)

सुहृत् सर्वदा सर्वथा च हितकरम् । बृहदितिपाठे गुणतः स्वरूपतः शरीरेण च सर्वेभ्यो महदित्यर्थः । उक्तं च श्रौतप्रमेयचन्दिकायां सिद्धान्तविजयिभिर्जगद्गुरुश्री-श्रियानन्दचार्यैः - 'बृहत्वाद् बृंहणत्वाच्च रामो ब्रह्मतयेरितः' ।।

भगवच्छ्रीबोधायनसम्पादितस्य वेदरहस्यस्य रहस्यमार्त्तण्डभाष्ये दुर्वादध्वान्त-मार्त्तण्डैर्जगद्गुरुभिः श्रीराघवानन्दाचार्यैःसमधृतं च श्रीरामब्रह्मप्रतिपादकं बोधाय - न मतादर्शवचनम् - 'आ सर्वत अन्तर्बहिश्चेत्यर्थः । वितते व्याप्ते,' तथोक्तं बोधायनमतादर्शे

'अन्तर्बहिर्जगत् सर्वं व्याप्य रामो हि संस्थितः ।
अनेन संवृतं ह्यन्तर्बहिः सर्वे तथान्तरम्' ।। इति ।। १७ ।।

**[जीवविलक्षणत्वम्]**

**नवद्वारे[१] पुरे[२] देही हंसो[३] लेलायते बहिः ।**
**वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ।। १८ ।।**

**प्र.** - ननु सर्वतः पाणिपादत्वादिकं गीतासु परिशुद्धात्मस्वरूपेण प्रसिद्धम् । ततश्च परिशुद्धस्वरूपस्यैव सर्वप्रभुत्वेशानत्वादिकमवगम्यत इति शिष्यशङ्कां शमयति - **नवद्वार** इति । मलप्रस्रवणद्वारतया हेयैः नवभिर्द्वारैर्युक्ते पुरवत् स्वात्यन्तभिन्ने अहमित्यभिमन्यमानो नानादेहसञ्चरणजंघालतया **हंस**शब्दितो जीवो नानादेहेषु उच्चावचयोनिषु **लेलायते** - गतागतं कुर्वन् परतन्त्रतया बम्भ्रमीतीति । अतः तस्य सर्वप्रभुत्वे का प्रसक्तिः? अतः ततः **बहिः** - बाह्य एव स्थावरजङ्गमात्मकसर्वलोकसंसारतन्त्रवाहीत्यर्थः ।। १८ ।।

---

१. **नवद्वारे** - द्वौ कर्णौ द्वे चक्षुषी द्वे नासिके आस्यमुपस्थः पायुश्चेति नवच्छिद्राणि यस्य तस्मिन् पुरे ।
२. **पुरे** - धातुभिः पूर्यते इति पुरं तस्मिन् ।
३. **हंसः** - बुद्ध्युपाधिः सन् हन्ति गच्छतीति हंसः । (शंकरानन्दभाष्यम्)

**आ.भा.** - ननु 'सर्वतः पाणिपादं तत्' इत्यादिमन्त्रेण यथा भगवतः सर्वतः पाणिपादत्वादिकमुक्तं तथैव गीतायास्त्रयोदशाध्यायस्य चतुर्दशे श्लोके 'सर्वतः पाणिपादं तत्' इत्येवंरूपेण परिशुद्धस्यात्मनश्चापि भगवता सर्वतः पाणिपादत्वादिकमुक्तम् । ततश्च

'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।

सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्' ।। (श्वे.उ.३-१७) इति मन्त्रोक्तं सर्वस्य प्रभुत्वेशानत्वादिकमपि परिशुद्धात्मस्वरूपस्यैव स्यादिति चेन्न, **नवद्वारे पुरे देही**त्यादिमन्त्रेण नवद्वारपुरे परिभ्रमणोक्त्या **हंस**शब्देनाभिहितस्य जीवस्य पुण्यपापकर्मपरतन्त्रोक्तेः । तथाहि - **नवद्वारे** शिरसि सप्त पायूपस्थयोश्च द्वे इति नवसंख्याकानि मलस्रावकानि द्वाराणि यस्मिन् तस्मिन् **पुरे** पुरवत् स्वात्यन्तभिन्ने देहे **देही** शरीरी **हंसो** हन्ति गच्छति नानादेहमिति **हंसो** हंसशब्दवाच्यो जीवो **लेलायते** स्वकृतपुण्यापुण्यकर्मपराधीनतया परिभ्रमतीत्यतस्तस्य सर्वप्रभुत्वेशानत्वादौ न शक्तिः किन्तु ततो बहिः **बाह्यः परमात्मैव सर्वस्य** स्थावरस्य चरस्य च **लोकस्य वशी** - वशकर्त्ता प्रभुरित्यर्थः ।। १८ ।।

**[अभेदव्यवहारनिर्वाहकत्त्वम्]**

**अपाणिपादो जवनो ग्रहीता**
**पश्यत्यचक्षुः स शृणोत्यकर्णः ।**
**स वेत्ति वेद्यं न च तस्यास्ति वेत्ता**
**तमाहुरग्र्यं पुरुषं महान्तम् ।। १९ ।।**

**प्र.** - **अपाणीति** । पाणिपादाद्यभावेऽपि तत्कार्यकारी इतरावेद्यः स्वयं सर्वज्ञः यः, तमादिकारणं महापुरुषं वदन्तीत्यर्थः ।

**आ.भा.** - अथ जीवादीशस्य विशिष्टतामाह - **अपाणिपादः** इति । न विद्यन्ते पाणिपादा यस्य सो**ऽपाणिपादः** पाणिपादरहितोऽपि **सः** ईश्वरो **जवनः** वेगशाली । वेगेन गतिमानित्यर्थः । **ग्रहीता** ग्रहणकर्त्ता । ईश्वरस्य वेगेन गमनं ग्रहणं च पाणिपादानपेक्षमस्तीत्यर्थः । एतच्चान्यकर्मेन्द्रियाणामुपलक्षणम् । ईश्वरस्य सर्वं कर्म सङ्कल्पाधीनत्वादस्य कर्मेन्द्रियानपेक्षमस्तीति यावत् । न विद्यते चक्षुर्यस्य सो**ऽचक्षुः** सन्नपि **स पश्यति** । ईश्वरस्य चाक्षुषं ज्ञानं चक्षुरिन्द्रियानपेक्षमस्तीत्यर्थः । न विद्येते कर्णौ यस्य सोऽकर्णः । अथापि **स शृणोति** । ईश्वरस्य श्रावणं ज्ञानं श्रवणाधीनं

नास्तीत्यर्थः । अत्रापि चक्षुरादिसर्वेषां ज्ञानेन्द्रियाणामुपलक्षणं बोध्यम् । ईश्वरस्य सर्वज्ञानं ज्ञानेन्द्रियानपेक्षमवगन्तव्यम् । स च सर्वमखिलं **वेद्यं** वस्तु **वेत्ति** जानाति किन्तु स्वरूपेण गुणश्च सर्वेभ्यो वेद्येभ्यो विलक्षणत्वात् कार्त्स्न्येन तस्य **वेत्ता** कश्चिदपि नास्ति । वेदाविदज्ञा वा **तमग्र्यम्** - अग्रगण्यं सर्वश्रेष्ठं महान्तं पुरुषमाहुः, 'वन्दे महापुरुष! ते चरणारविन्दम्' इत्यादिरूपेणाहुः । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (भ.गी.१५-१७) । इत्येवंरूपेण गीतायां भगवताप्युक्तम् । सिद्धसम्राड्जगद्गुरु श्रीराघवानन्दाचार्यदुर्वादध्वान्त-मार्त्तण्डैरपि चोक्तं श्रीराघवेन्द्रमङ्गलमालायाम् -

'पुरुषायोत्तमायाथ क्षराक्षरपराय च ।
परमात्माभिधानाय राघवेन्द्राय मङ्गलम्' ।। इति ।। १९ ।।

**अणोरणीयान् महतो महीया-**
**नात्मा गुहायां निहितोऽस्य जन्तोः ।**
**तमक्रतुं पश्यति वीतशोको**
**धातुः प्रसादान्महिमानमीशम्[१] ।। २० ।।**

**प्र. - अणो**रिति । सकलसूक्ष्मवस्त्वन्तःप्रवेशयोग्यसौक्ष्मवान् निरतिशयबृहत्वशाली एवम्भूतः **अस्य जन्तोः** - प्राणिनो जीवस्य **आत्मा** - प्रेरकस्सन् सर्वजीवस्य हृदय-गुहायामास्ते । **जन्तो**रित्येतत् **आत्मा** इत्यत्रापि च संबध्यते; आकाङ्क्षासत्त्वात् । **गुहायाम्** इति निर्दिष्टहृदयगुहायामपि 'सम्बध्यते । तादृशम् **अक्रतुं** - कर्मलेपशून्यं महामहिमशालिनमीशं यदा **पश्यति,** तदा **धातुः** - धारकस्य परमात्मनः प्रसादात् **वीतशोको** भवति । 'प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः' इति स्मृतेः । ततश्च ध्यानसाध्यपरमात्मप्रसादनिर्वर्त्यतया ज्ञाननिवर्त्यत्वेन (प्रसादनिवर्त्यतया (ज्ञाननिवर्त्यत्वेन?) बन्धस्य मिथ्यात्वं प्रत्युक्तम् ।। २० ।।

**आ.भा.** - अथ वीतशोकत्वावाप्तेर्हेतुमाह - **अणोरणीयानिति । अणोः** अणुपरिमाणविशिष्टात् पदार्थादपि अणीयान् अणुपरिमाणशाली । निखिलसूक्ष्मपदार्थान्तः-प्रवेशयोग्यसूक्ष्मत्वविशिष्ट इत्यर्थः । सर्वेभ्योऽणुपदार्थेभ्योऽणुतम इति यावत् । तथात्वेऽपि **महतः** सकलमहत् परिमाणविशिष्टेभ्यो **महीयान्** - महत्परिमाणविशिष्टः ।

---

१. अयं मन्त्रः तैत्तिरीयारण्यके (१०-१२) तथा किञ्चित्व्यत्यासेन कठोपनिषदपि च श्रूयते ।

निरतिशयबृहत्त्वविशिष्ट इत्यर्थः । इत्थम्भूतोऽपि परमात्मा श्रीरामः **अस्य जन्तोः** जीवस्य । जन्तोरित्येकवचनं जात्यभिप्रायेण सर्वस्य जीवव्रातस्यात्मा प्रेरकोऽस्य जीववर्गस्य **गुहायाँ** हृदयगुहायां **निहितः** स्थितोऽस्ति प्रेरकतया स्थित इत्यर्थः । **तं** तादृशम् अक्रतुम् अकर्माणम् । कर्मकर्तृत्वशालित्वेऽपि तदनासक्तिमत्त्या कर्मलेपशून्यमित्यर्थः । महत् महिमविशिष्टमिति यावत् । **धातुः** जगद्धारकस्य जगत्पालकस्य वा परब्रह्मणः श्रीरामस्य **प्रसादात्** । **ईशं** सर्वेश्वरं भगवन्तं श्रीरामस्य **महिमान**मखिलजगन्नियमनरूपं **यदा पश्यति** अवलोकयति तदा **वीतशोको** गतशोकः । क्लेशशून्य इत्यर्थः । भवतीति शेषः ।। २० ।।

**वेदाहमेतमजरं पुराणं**
**सर्वात्मानं सर्वगतं विभुत्वात् ।**
**जन्मनिरोधं प्रवदन्ति[1] यस्य**
**ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ।। २१ ।।**

**।। इति तृतीयोध्यायः ।।**

**प्र. - वेदाहमिति -** यस्य विभुत्वेन जन्माभावं प्रकर्षेण वदन्ति, तमजरं पुरातनं सर्वगतत्वात् सर्वात्मानं **अहं वेद -** जाने इत्येवं ब्रह्मवादिनः नित्यं वदन्तीत्यर्थः ।। २१ ।।

**।। इति तृतीयाध्याय प्रकाशिका ।।**

**आ.भा. -** अथ प्रागुक्तं वक्तव्यार्थं निगदयति - **वेदाहमिति** । 'अजायमानो बहुधाभिजायते' (तै.आर.३-१३-३) 'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ.उ.५-१३) इत्यादि यस्य विभुक्ताज्जन्म निरोधं कर्मप्रयुक्तजन्माभावं **प्रवदन्ति** प्रकर्षेण कथयन्ति । अहमेतं विभुत्वात् सर्वगत 'अन्तः प्रविष्टः शास्ता जनानाम्' (तै.आर.३-११-१०) इति श्रुतिप्रमाणितं सर्वान्तर्यामिणम् अजरं जरारहितं **पुराणं** पुरातनं सर्वात्मानं वेदेत्येतादृशं 'रमन्ते योगिनोऽनन्ते नित्यानन्ते चिदात्मनि । इति रामपदेनासौ परब्रह्माभिधीयते' (श्रीरामपूर्वतापिनीयोपनिषत् - ६) इति श्रुतिप्रमाणितस्य स्वरूपगुणादिभिर्बृहत्तमस्य परब्रह्मणो भगवतः श्रीरामस्य वदनशीला महात्मानो नित्यं प्रवदन्ति ।। २१ ।।

**।। इति तृतीयाध्याय आनन्दभाष्यम् ।।**

---

१. अत्र उत्तरार्धे 'प्रवदन्ति' इति पुनरुक्तिनिवारणार्थं शंकरानन्दैः मूढाः जन्म च निरोधश्च जन्मनिरोधम् उत्पत्तिविनाशौ इत्यर्थः । प्रवदन्ति प्रकर्षेण कथयन्ति यस्य आत्मनः । ब्रह्मवादिनः उत्पन्नतत्त्वसाक्षात्काराः नित्यं इति कथयन्ति प्रकर्षेण कथयन्ति इत्यर्थः ।। इति व्याख्यातम् ।।

## अथ चतुर्थोऽध्यायः

**य एको वर्णो बहुधा शक्तियोगात्**
**वर्णाननेकान् निहितार्थो दधाति ।**
**विचैति चान्ते विश्वमादौ स देवः**
**स नो बुद्ध्या शुभया संयुनक्तु ।। १ ।।**

**प्र. -** ब्रह्मणः सर्वविधकारणत्वं प्रपञ्चयिष्यन् तद्विषयबुद्धिप्रार्थनामन्त्रमाह - **य एक** इति । 'अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिरभिव्यज्यमाना बह्वी नानाविधा भवति' (ऐ.उ.३-६-७) इति ऐतरेयश्रुतेः, एकः अवर्णः **निहितार्थः** अर्थः - परं ब्रह्म स्ववाच्यत्वेन निहितः यस्मिन् तथोक्तः परमपुरुषार्थभूतब्रह्मवाचकः - 'अकारेणोच्यते विष्णुः' (पाञ्चरात्रे) इति श्रुतेः तादृशो अवर्णः सर्वान् वर्णान् **दधाति** उत्पादयति । **सः विश्वं -** कृत्स्नप्रपञ्चम् अन्तकाले **व्येति -** अन्तर्भावितण्यर्थोऽयम् - गमयति नाशयति । स देवः **शुभया** बुद्ध्या योजयतु । अत्र वाच्यवाचकयोरभेदोपचारात् **स देव** इत्युक्तिः ।। १ ।।

**आ.भा. -** अथ 'द्यावाभूमी जनयन् देव एकः' इति देवशब्देनाभिहितस्य 'भगवान्नारायणो देव' इति श्रीमद्रामायणवचनप्रमाणितस्य 'इति रामपदेनासौ परब्रह्माभिधीयते' इति श्रीरामतापनीयश्रुतिप्रमाणितस्य परब्रह्मणो भगवतः श्रीरामस्य 'यस्यात्मा शरीरं' 'यस्य पृथिवी शरीरं', (सुबा.उ.७-१) 'सर्वात्मा जगत्सर्वं शरीरं ते' (रा.यु.१२०-२९) इत्याद्यनेकश्रुतिस्मृतिप्रमाणितं सर्वात्मत्वं 'पतिं विश्वस्य' (महाना.९-३) इत्यादि श्रुत्यापादितं सर्वस्वामित्वं 'यतो वा इमानि भूतानि जायन्ते' (तै.उ.३-१) इत्यादिश्रुतिप्रतिपादितं सर्वकारणत्वं च प्रतिपादयिष्यन् तद्विषयिणीं बुद्धिं प्रार्थयति - **य एक** इति । **य एको** मुख्योऽ**वर्णः ।** अवतीति अः, रक्षकः । आप्नोतीति अः, व्यापकः । वर्ण्यते प्रतिपाद्यते इति वर्णः 'सर्वे वेदा यत्पदमामनन्ति' (कठ.उ.२-१५) इति श्रुतिप्रतिपादितः । अश्चासौ वर्णश्चावर्णः सर्वेषां रक्षको व्यापकः सर्वश्रुतिप्रतिपादितश्च यः । अर्थ्यन्तः इत्यर्थाः पदार्थाः । **निहिता** सूक्ष्मरूपेण रक्षिता निखिलपदार्था यस्मिन् स **निहितार्थः** सूक्ष्मरूपेण स्वस्मिन् स्थापितसर्वपदार्थः । बहुधा शक्तियोगादुत्पादकत्वादिशक्तिवैशिष्ट्यादादौ सृष्टिकालेऽनेकान् वर्णान् पदार्थान् **दधाति** धारयति पोषयति च । **अन्ते** प्रलयकाले च **विश्वं विचैति** स्वस्मिन्नदर्शनं च गमयति । एवंभूतो यो **देवः** सृष्ट्यादिलीलाविधायकः **स भगवान्** श्रीरामः **नः** अस्मान् **शुभया बुद्ध्या संयुनक्तु** शुभबुद्धिविशिष्टान् विदधातु ।। १ ।।

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।**
**तदेव शुक्रं तद्ब्रह्म तदापस्तत् प्रजापतिः ।। २ ।।**

**प्र.** - तस्य देवस्य सर्वात्म्यमाह - **तदेवाग्निरिति । शुक्रं** - रोचिष्ठम् । नक्षत्रमण्डलमित्यर्थः । शिष्टं स्पष्टम् ।। २ ।।

**आ.भा. - तदेवाग्निरिति । तदेव** परब्रह्म स एव परब्रह्माख्यः श्रीरामोऽग्निरादित्यो **वायुश्चन्द्रमाः शुक्रं** प्रकाशविशिष्टनक्षत्रमण्डलमापः **प्रजापतिर्ब्रह्मा** चास्ति । अग्न्यादिष्वन्तरात्मरूपेण वर्त्तमानतया सर्वेश्वरश्रीरामस्यैवाग्न्यादितत्तच्छब्दवाच्यता बोद्धव्येत्यर्थः ।

'योऽसौ सर्वतनुः सर्वः सर्वनामा सनातनः ।
अलिप्तः सर्वभावेषु श्रीरामः शरणं मम' ।। इत्यागमोक्तेः ।। २ ।।

**त्वँ स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।**
**त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ।। ३ ।।**

**प्र.** - तदेव सार्वात्म्यं संबोधनेनाह - **त्वं स्त्रीति । दण्डेन** आलम्बनेन **जीर्णः** वृद्धस्सन् **वञ्चसि** - सञ्चरसि । अत्यल्पमिदमुच्यते । त्वमेव सर्वरूपो जातोऽसीत्यर्थः ।। ३ ।।

**आ.भा.** - अथ परब्रह्मणो भगवतः श्रीरामस्योक्तमेव सर्वात्मत्वं सम्बोधनद्वाराऽभिदधाति - **त्वं स्त्रीति ।** हे देव भगवन् श्रीराम! अग्न्याद्यन्तरात्मतया-वर्त्तमानस्त्वं त्वमेव **स्त्री असि** स्त्रीत्वविशिष्टान्तरात्मतया वर्त्तमानोऽपि त्वमेवासीत्यर्थः । **त्वं** त्वमेव **पुमानसि,** पुंस्त्वविशिष्टान्तरात्माऽपि त्वमेवासीत्यर्थः । **त्वं कुमारः** कुमारत्वविशिष्टान्तरात्मा **उत** अपि **त्वं** - त्वमेव **कुमारी** - कुमारीत्वविशिष्टान्तरात्मा वा चासि । **जीर्णो** जीर्णत्वावस्थापन्नो वृद्धात्मा सन् दण्डेन अवलम्बभूतेन लगुडेन **वञ्चसि** सञ्चरस्यपि **त्वं** त्वमेव । अत्यल्पमितमुक्तं सर्वात्मत्वेन सर्वगतत्वात् **विश्वतोमुखः** सर्वरूपेण जातस्त्वमेवासि । आख्यातञ्च परिपूर्णब्रह्मणो भगवतः श्रीरामस्य विश्वरूपत्वं श्रीरामस्तवकलानिधौ बोधायनवृत्तिकार जगद्गुरु श्रीपुरुषोत्तमाचार्यकृपापात्रैर्यति-सम्राट्जगद्गुरुश्रीगङ्गाधराचार्यदेवैः -

'सुरध्येय! नमस्तेऽस्तु योगिध्येय! नमोऽस्तु ते ।
मुनिध्येय नमस्तेऽस्तु श्रीरामाय नमोऽस्तु ते ।।
नमस्ते विश्वरूपाय नमस्ते विश्वहेतवे ।
नमस्ते विश्ववन्द्याय नमस्ते विश्वरक्षक! ।। ४ ।।

अपरयाज्ञवल्क्यजगद्गुरुश्रीश्रुतानन्दाचार्यवेदविद्यानिधिभिर्भगवतः श्रीरामचन्द्रस्य सर्वात्मत्वमभिहितञ्चोपेयोपायदर्पणे -

करणेशेशरामश्चानेन जीवेन चात्मना ।
सृष्ट्वा विश्वं प्रविश्यान्तर्विश्वेषां प्रेरकस्तथा ।
सर्वात्मा सर्वदेहश्च सर्वाराध्यश्च सर्वदः ।
सर्वशक्तिश्च सर्वेशः सर्ववित् सर्वकृत् तथा' ।। इति ।। ३ ।।

**नीलः पतङ्गो हरितो लोहिताक्षः**
**तडिद्गर्भ ऋतवः समुद्राः ।**
**अनादिमत्त्वं विभुत्वेन वर्तसे**
**यतो जातानि भुवनानि विश्वा ।। ४ ।।**

**प्र. - नील** इति । **नील हरितः** - लोहिताक्षभेदभिन्नः **पतङ्गः** - पक्षी त्वमेव; (तटिद्गर्भः?) **ऋतवः समुद्राश्च** । त्वमेव अनादिः । **यतो** विश्वानि भूतानि **जातानि**, तदपि त्वमेव; निखिलजगत्कारणमपि त्वमेवेत्यर्थः । नीलपतङ्गाद्यात्मत्वमपि न स्वरूपेण; अपि तु व्यापकत्वेनात्मत्वादित्येतत् प्रदर्शयति - **विभुत्वेन वर्तस** इति । यतस्त्वं व्याप्य आत्मतया **वर्तसे**, तत सर्वात्मत्वमित्यर्थः ।। ४ ।।

**आ.भा. - नील** इति । त्वमिति पदं सर्वत्र सम्बध्यते । हे भगवन् श्रीराम! **नीलः** कृष्णवर्णः कोकिलादिः **हरितो** हरितवर्णः शुकादिः लोहिताक्षो राजहंसादिः **पतङ्गः** पक्षिविशेषः । त्वमेवासि । **तडिद्गर्भो**ऽस्यासौ तडिद्गर्भोमेघस्त्वमेवासि । **ऋतवो** वसन्तादय ऋतवः त्वमेवासि । **समुद्राः** सागरा अपि त्वमेवासि । अत्र सर्वत्र सामानाधिकरण्यं शरीरात्मभावनिबन्धनं बोध्यम् । **यतो** यस्माद् **विश्वानि** सर्वाणि **भुवनानि** भूरादीनि **जातानि** - उत्पन्नानि तदनादिमदादिरहितं सर्वकारणभूतं च त्वमेवासि । हे भगवन् श्रीराम! त्वं विभुत्वेन वर्त्तसे । त्वमेव समस्तचिदचित्पदार्थानभिव्याप्य तिष्ठसि । सर्वव्यापकस्त्वमेवासीत्यर्थः ।। ४ ।।

[चिदचिद्विवेकः]

**अजामेकां लोहितशुक्लकृष्णां**
**बह्वीः प्रजाः सृजमानां सरूपाः ।**
**अजो ह्येको जुषमाणोऽनु शेते**
**जहात्येनां भुक्तभोगामजोऽन्यः ।। ५ ।।**

**प्र.** - 'भोक्ता भोग्यं प्रेरितारं च मत्वा', (श्वे.उ.१-१२) 'क्षरं प्रधानम् अमृताक्षरम्' इति पूर्वनिर्दिष्टचिदचिद्विवेकं दर्शति - **अजामेकामिति** । तेजोबन्नलक्षणविकारगतलोहित-शुक्लकृष्णरूपयुक्तां स्वसमानरूपविविधभूतभौतिकस्रष्टीम् उत्पत्तिरहितां काञ्चन कश्चिदविद्वान् उत्पत्तिराहित्येन तत्समान एव सन् तत्राहम्बुद्धया सेवमानः तामनुसृत्य **शेते** - तिष्ठति । अपरो विद्वान् । कश्चित् कालं भुक्त्वा उत्पन्नवैराग्यः त्यजतीत्यर्थः ।

**[अजामन्त्रार्थविचारः]**

ननु अस्मिन् अजामन्त्रे स्वरसत एतावान् अर्थः प्रतीयते - काञ्चित् छागीं त्रिवर्णां स्वसरूपबहुप्रकाराम् (प्रजाकरीम्?) एकश्छागः प्रीयमाणोऽनुवर्तते, अन्यः तामुपभुक्तां त्यजतीति । कथं भवदुक्तप्रकृतिरूपार्थग्रहणम्? यदि च अध्यात्मशास्त्रे लौकिकार्थप्रतिपादनानौचित्यात् आध्यात्मिकार्थे पर्यवसानं कर्तव्यमिति, तर्हि 'द्वा सुपर्णा' इति मन्त्रो वृक्षसुपर्णपिप्पलशब्दैः शरीरजीवकर्मफलानां गौण्या वृत्त्या ग्रहणवत्, 'गौरनाद्यन्तवती' (मन्त्रि.उ.१-५) इत्यत्र गोशब्देन गौण्या वृत्त्या प्रकृतिग्रहणवत् इहापि अजाशब्देन गौण्या वृत्त्या प्रकृतिग्रहणं युक्तम् । न तु यौगिकार्थग्रहणम् । रूढिपूर्वकलक्षणाविशेषरूपगौण्यपेक्षया योगदौर्बल्यस्य प्रोद्गात्रधिकरणे[१] स्थितत्वात् । 'इतरथा प्रैतु होतुश्चमसः प्रोद्गातृणाम्' इत्यत्रापि यौगिकवृत्त्या उद्गात्रादीनां चतुर्णां ग्रहणं स्यादिति चेन्न -

मुख्यार्थानुपपत्तौ हि गौणार्थाश्रयणं युज्यते । उपपद्यते च अजाशब्दे यौगिकार्थस्य मुख्यस्य ग्रहणम् । न चैव प्रोद्गातृन्यायविरोधः । तत्र पाशन्यायेन बहुत्वाविवक्षा नास्ति; प्रोद्गातृशब्दयौगिकार्थबहुत्वस्य सम्भवात् । 'अदितिः पाशान् प्रमुमोक्तु' (पू.मी.सू.९-३-५) इत्यत्र रूढ्यर्थस्य वा यौगिकार्थस्य वा पाशशब्दार्थस्य बन्धनसाधनस्यासम्भवात् बहुत्वाविवक्षा । इह तु तत्सम्भवात् नाविवक्षेत्येवं (व?) तदधिकरणस्थितिः ।

न तु रूढिपूर्वकलक्षणापेक्षया योगस्य जघन्यत्वमित्यपि । नन्वेवं सुब्रह्मण्यस्यापि गानकारितया योगार्थत्वात् तस्यापि ग्रहणप्रसङ्ग इति चेन्न - तस्य सदसि स्थित्यभावेन तत्साधारण्याभावात् । मीमांसेकैकदेशिभिः तत्साधारण्यस्याभ्युपेतत्वाच्च ।

ततश्च यौगिकार्थस्य मुख्यस्य अजाशब्दार्थस्य सम्भवे पररीत्या छागत्वरूपणं गौणवृत्त्याश्रयणञ्च अयुक्तम् । 'गौरनाद्यन्तवती' इत्यत्र गोशब्दे यौगिकार्थास्फुरणात्,

---

१. प्रोद्गात्रधिकरणं - (पू.मी.३-५-७)

'सर्वकामदुघाम्' इति दोहनस्य गोशब्दरूढ्यर्थग्रहणनियामकस्य सत्त्वाच्च तत्र तथा; इह तु योगार्थस्फूर्तेः रूढ्यर्थग्रहणनियामकशब्दान्तरसमभिव्याहाराभावाच्च यौगिकार्थ एव ग्राह्यः ।

किञ्च इह रूढ्यर्थग्रहणे समभिव्याहृतानाम्, 'बह्वीः प्रजासृजमानाम्' (मैत्रा.उ.२-६) इत्यादीनां सङ्कोचः स्यात् । छाग्याः प्रकृतिवत् सकलप्रजास्रष्टृत्वासम्भवात् । सकलप्रजासर्गकरप्रकृत्यामल्पप्रजासर्गकारिच्छागीत्वपरिकल्पनस्य विच्छित्तिविशेषाहेतुत्वात् । न चैवम् 'आत्मानं रथिनं विद्धि' (कठ.उ.१-३) इत्यादौ आत्मशरीरादौ रथिरथत्वादिकल्पनमपि न विच्छित्तिविशेषजनकं स्यादिति वाच्यम् । तत्र रूप्यरूपकवाचिपदद्वयश्रवणबलेन वशीकार्यताप्रतीत्युपयुक्ततया च रूपणमङ्गीक्रियते । प्रकृते तु रूप्यरूपकवाचिपदद्वयाश्रवणात् तद्वदत्रोपयोगाभावाच्च न छागत्वपरिकल्पनम् । 'द्वा सुपर्णेति' (श्वे.उ.४-६) मन्त्रेऽपि वृक्षादिशब्दैर्योगवृत्त्या अर्थग्रहणं युक्तम् । समासोक्त्या अर्थान्तरस्फूर्त्या विच्छित्तिविशेषोऽस्तीत्येतावन्मात्रम् । यदि च न वृक्षादिशब्दैः यौगिकार्थग्रहणम् तर्हि, 'गौरनाद्यन्तवतीतिवदस्तु । प्रकृते तु अजाशब्देन यौगिकार्थस्य स्फुटप्रतीतेः योग एव ग्राह्यः । एतत् सर्वं 'कल्पनोपदेशात्' (ब्र.सू.१-४-१०) इति सूत्रभाष्यश्रुतप्रकाशिकयोः स्पष्टम् । अनेन प्रकृतिस्वरूपं बद्धमुक्तस्वरूपञ्च उक्तम् ।

ननु अजाशब्देन अकार्यत्वप्रतिपादनात् सृजमानाम् इति कर्त्रर्थशानचा स्वातन्त्र्यलक्षणकर्तृत्वप्रतीतेः अब्रह्मात्मिकैव प्रकृतिरनेन मन्त्रेण अभिधीयतामिति चेत् - एवमेव समन्वयाध्याये पूर्वपक्षे प्राप्ते उच्यते -

'चमसवदविशेषात्' (ब्र.सू.१-४-८) । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः तस्मिन् यशोनिहितं विश्वरूपाम्' (बृ.उ.४-२-३) इति मन्त्रे, 'अर्वाग्बिलश्चमस' इति ऊर्ध्वबिलतिर्यग्बुध्नप्रसिद्धचमसव्यावर्तकस्य शिरसश्चमसत्वप्रत्यायकस्य वाक्यशेषस्य सद्भाववत् इह अस्वतन्त्रप्रकृतिव्यावर्तकस्य सांख्याभिमतस्वतन्त्रप्रकृतिप्रतिपादकस्य वाक्यशेषस्य अभावेन स्वतन्त्रा प्रकृतिरिहाभिधीयत इति निर्णयासंभवात् । ब्रह्मात्मकत्वेऽपि जनिराहित्यस्योपपत्तेः । परतन्त्रेऽपि तक्षादौ, 'तक्षति काष्ठम्' इति कर्त्रर्थप्रत्ययदर्शनेन तावन्मात्रेण अपरतन्त्रप्रकृतित्वनिश्चयासंभवात् ।

ननु ब्रह्मात्मकप्रकृतिग्रहणेऽपि नियामकाभावात् सन्देह एव स्यात् । तत्राह, 'ज्योतिरुपक्रमा तु तथा ह्यधीयत एके' (ब्र.सू.१-४-९) । 'अथ यदतः परा दिवो

ज्योतिर्दीप्यते' (छां.उ.३-१३-७) इत्यादौ ज्योतिश्शब्देन ब्रह्मनिर्देशदर्शनात् इह सूत्रेऽपि ज्योतिश्शब्देन ब्रह्मोच्यते । उपक्रमशब्दः कारणत्वार्थकस्सन् आत्मत्वं लक्षयति । मृत्कारणकस्य घटादेः मृदात्मकत्वदर्शनात् । तथा च (ततश्च) ज्योतिरुपक्रमा - ब्रह्मात्मिका इत्यर्थः । ब्रह्मात्मिकैवाजेह मन्त्रे ग्राह्या । उपक्रमे - 'देवात्मशक्तिं स्वगुणैः निरूढाम्' इति ब्रह्मात्मकाजाया एव प्रतिपादितत्वात् । तैत्तिरीये, 'अणोरणीयान् महतो महीयान्' (तै.ना.८१) इति ब्रह्म प्रस्तुत्य, 'सप्त प्राणाः प्रभवन्ति तस्मात्' (तै.ना.८-२) इति प्राणोपलक्षितसकलप्रपञ्चोत्पत्तिमभिधाय निर्विकारस्य ब्रह्मणः अपरिणामितया सकलप्रपञ्चोपादानत्वं न सम्भवतीति शङ्कावारणाय पठितस्यास्य मन्त्रस्य ब्रह्मात्मकप्रकृतिपरत्वस्य वक्तव्यतया इहापि तथात्वावश्यम्भावाच्च ब्रह्मात्मिकैव प्रकृतिः अजामन्त्रप्रतिपाद्या ।

ननु आकाशादीनां ब्रह्मोपादानकत्वेन ब्रह्मात्मकत्ववत् प्रकृतेरपि ब्रह्मोपादानकत्वेन ब्रह्मात्मकत्वस्य वक्तव्यतया अनुत्पन्नायाश्च तस्याः ब्रह्मोपादानकत्वासम्भवेन ब्रह्मात्मकत्वासम्भव इत्याशङ्क्याह, - 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' (ब्र.सू.१-४-१०) । कल्पनं सृष्टिः । 'धाता यथा पूर्वमकल्पयत्' (तै.आर.१०-१-१४) इति प्रयोगदर्शनात् । 'अस्मान्मायी सृजते विश्वमेतत्' (श्वे.उ.४-९) इति मायाशब्दितप्रकृतेः ब्रह्मोपादेयप्रपञ्चसृष्टौ हेतुत्वावेदनात् इत्यर्थः । प्रकृतेरब्रह्मात्मकत्वे च तस्याः ब्रह्मात्मकत्वं सिद्धम् । अपृथक्सिद्धत्वाधारत्वमात्रेणापि आत्मत्वोपपत्त्या अजन्याया अपि प्रकृतेः ब्रह्मात्मकत्वं सम्भवत्येवेति ब्रह्मात्मकत्वमविरुद्धम् । मध्वादिवत् । अत्र मधुशब्देन, 'असावादित्यो देवमधु' (छां.उ.३-१-१) इति निर्दिष्टो आदित्य उच्यते । आदित्यवदित्यर्थः । यथा आदित्यस्य 'नैवोदेता नास्तमेता' इत्यकार्यतया श्रुतस्यैव, 'य आदित्ये तिष्ठन्' (बृ.उ.५-७-१३) इत्यादिना ब्रह्मात्मकत्वञ्च, एवमनादेरप्युपपद्यते ब्रह्मात्मकत्वमिति स्थितम् । प्रकृतमनुसरामः ।। ५ ।।

**आ.भा.** - पूर्वप्रकरणप्रदर्शितचिदचिद्विवेकं 'क्षरं प्रधानममृताक्षरम्', (श्वे.उ.१-१०) भोक्ता भोग्यं प्रेरितारञ्च मत्वा (श्वे.उ.१-१२) इत्यादिकं स्फोरयन्नाह - **अजामेकाम्** इत्यादि। तेजोजलपृथिवीरूपेण परिणामाद्रक्तश्वेतकृष्णस्वरूपवीतमजां स्वसमानानेक-प्रजोत्पादयित्रीं जन्मरहितप्रकृतिं स्नेहेन सेवमान एकोऽजन्मा जीवस्तत्रानुरक्तो भवन्नवतिष्ठते । अन्यो भगवच्छरणापत्या सञ्जात वैराग्योऽजन्मा जीवो भुक्तभोगां तां परित्यजतीत्यर्थः ।। ५ ।।

[जीवब्रह्मवैलक्षण्यम्]

**[1]द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।। ६ ।।**

**प्र.** - प्रकृतिसम्बन्धाविशेषेऽपि जीवस्य भोक्तृत्वम्; न परमात्मन इत्येतत् दृष्टान्तमुखेन प्रदर्शयति - **द्वा सुपर्णेति ।** युज्यते इति युक्छब्दो गुणपरः । समानगुणकः सयुक् इति व्यासार्यैर्विवृतत्वात् । **सखायौ** परस्पराविनाभूतौ गमनसाधनत्वेन पर्णशब्दितपक्षसदृशज्ञानादिगुणवन्तौ **समानम् एकं वृक्षं** - वृक्षवत् छेदनार्हं शरीरं समाश्रितौ । तयोर्मध्ये एको जीवः परिपक्वं **पिप्पलं** - अश्वत्थफलसदृशं कर्मफलम् **अश्नाति ।** इतरस्तु परमात्मा अनश्नन्नेव अपहतपाप्मत्वादि महामहिमशाली वर्तत इत्यर्थः । अत्र शरीर तदाश्रयजीव परवाचिशब्दनिगरणेन विषयिवाचकवृक्षसुपर्णादिशब्दैः वृक्षत्वाद्यध्यवसानलक्षणारूपकातिशयोक्तिः विच्छित्तिविशेषायेति केचित् । वृक्षादिशब्देन योगवशात् शरीरादिप्रतीतिः; न तु रूपकातिशयोक्तिरित्यन्ये ।। ६ ।।

**आ.भा.** - जीवस्य प्रकृतिसम्बन्धराहित्ये सत्यपि स्वभावतया कर्मफलभोक्तृत्वं न तु ब्रह्मण इति निदर्शनतयाऽवतारयति - **द्वा सुपर्णेत्यादि ।** युक्छब्दो गुणवचनपरो युज्यत इति व्युत्पत्तेः **सखायौ** अपृथक्भूतसम्बन्धेन परस्परसंमिलितौ जीवपरमेश्वरौ संचलनसाधनतया पर्णशब्दव्यवहृतपक्षतुल्यज्ञानादिगुणत्वेन तुल्यौ **समानम् एकं वृक्षं** वृक्षतुल्यसंछेदनविषयभूतषाड्कौशिकदेहसमवस्थितौ जीवेशावित्यर्थः । **तयोरन्यो** जीवः पूर्वानेकभवोपार्जितस्वकर्मफलभूतं फलोपधायोन्मुखं **पिप्पलम्** अश्वत्थवृक्षफलवत्परि-पक्वतया स्वादुबद्धतयाऽज्ञानविजृम्भितत्वेन स्वादुबुद्धियुक्तः स्वस्यैव कर्मफलं भुनक्ति । **अन्यः** सर्वजननियन्ताऽपहतपाप्मत्वाद्यनेकगुणगणमहिमावान् सर्वेश्वरश्रीरामोजीवेन विना-भूतत्वेऽपि तत्संश्लिष्टकर्म फलमनश्नन्ने**वाभिचाकशीति** समभिवर्तत इत्येतत् । धातूनामनेकार्थत्वात् प्रेरयति - सर्वजीवान् स्वकर्मफलभोगायेत्यर्थः । प्रकृतमन्त्रे 'तयोरन्योऽनश्नन्नन्यः' इत्युक्त्या जीवपरमात्मनोः सर्वथा भेदः प्रदर्शितस्ततश्च जीवात्मा परमात्मा श्रीरामापेक्षयाऽत्यन्तं भिन्न इति दृढीकृतं भगवत्या श्रुत्या । ततश्चेतरमताभ्युपगतं जीवब्रह्मणोरैक्यं निरस्तमवगन्तव्यं श्रुतिविरोधात् ।। ६ ।।

---

१. अयं मन्त्रः ऋग्वेदे (२-३-१७) मुण्डकोपनिषदि च (३-१-१) श्रूयते ।

**समाने वृक्षे पुरुषो निमग्नोऽ-**
**नीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीश-**
**मस्य महिमानमिति वीतशोकः ।। ७ ।।**

**प्र. - समान** इति । **अनीशया** भोग्यभूतया प्रकृत्या **मुह्यमानः -** 'पराभिध्यानात्तु तिरोहितम्' (ब्र.सू.३-२-४) इति सूत्रोक्तन्यायेन तिरोहितपरमात्माशेषत्वज्ञानानन्दलक्षणस्वस्वरूपस्सन् वृक्षवच्छेदनार्हे एकस्मिन् शरीरे जीवः, 'स्थूलोऽहं' 'कृशोऽहं' इति तादात्म्यबुद्ध्या पांसूदकवत् तदेकतामापन्नस्सन् तत्संसर्गकृतानि दुःखान्यनुभवति । यदा असौ जीवो निमग्नात् स्वस्मात् धारकत्वनियन्तृत्वशेषत्वादिना विलक्षणं स्वकर्मभिः प्रीतं परमात्मानम्,अखिलजगदीशानलक्षणमस्य महिमानञ्च पश्यति; तदा वीतशोको भवतीत्यर्थः । केचित्तु - **अनीशया -** अनीशत्वेन असमर्थत्वेन शोचन् स्वोद्धरणसमर्थं स्वयं पङ्कादौ अनिमग्नं स्वस्मिन् प्रतीतिमन्तं तदुद्धरणसामर्थ्यलक्षणमहिमानं च दृष्ट्वा वीतशोको भवति । तत्समाधिरत्रानुसन्धेयः । 'अनीशया प्रकृत्या' इति भाष्यमपि अर्थतो व्याख्यानपरम् । न त्वनीशाशब्दार्थतयेति वदन्ति ।। ७ ।।

**आ.भा. -** पूर्वमन्त्रोपदिष्टं प्रस्फोरयति - **समान** इत्यादि । पूर्वमन्त्रप्रतिपादितशरीररूपैकवृक्षेसमासक्तः पुरुषो जीवात्मा निमग्नः 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (ब्र.सू.३-२-४) इति परमार्षन्यायेनावबोधितपरमपुरुषात्मशेषत्वज्ञानानन्दत्वादिस्वरूपो भूत्वा 'स्थूलोऽहम्' 'कृशोऽहम्' इत्यादिरूपेण तादात्म्यतया **अनीशया** भोग्यस्वरूपया प्रकृत्या **मुह्यमानो** विवेकवैधुर्यतया स्वलक्ष्यनिर्धारणेऽसमर्थःसन् **शोचति** स्वप्राक्तनकर्मजनितदुःखादिकमनुभवतीत्यर्थः । यदात्वसौ जीवः सर्वेश्वरश्रीरामस्याहैतुकीकृपया **जुष्टं** श्रीहनुमदादिनित्यमुक्तादिभिरहर्निशं संसेवितमन्यं स्वस्माद्भिन्नम् ईशं धारकत्वनियंतृत्वशेषित्वादिनातिवैलक्ष्यण्यं

'राम एव परं ब्रह्म राम एव परं तपः ।

राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम्' ।। (राम.र.उ.१-६) इत्यादिरूपेण श्रुतिप्रतिपादितं सर्वेशश्रीराममस्यसकलेशितुः 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्तेऽभिसंविशन्ति' (तै.आन.३-१) 'जन्माद्यस्य यतः' (ब्र.सू.१-१-२) इत्यादि श्रुतिसूत्रप्रतिपादितं महिमानमत्याश्चर्यमयमखिलजगदीशनलक्षणञ्च पश्यति परमेशितुरहैतुकीकृपया प्रत्यक्षतोऽनुभवति 'यमेवैष वृणुते तेन लभ्यः' (कठ.उ.२-२२) (मुं.उ.३-२-३) इति श्रुतेस्तदा वीतशोकऽपगत ऐहिकप्रपञ्चो भवतीति शेषः ।। ७ ।।

**ऋचोऽक्षरे परमे व्योमन्**
**यस्मिन् देवा अधि विश्वे निषेदुः ।**
**यस्तन्न वेद किमृचा करिष्यति**
**य इत् तद् विदुस्त इमे समासते ।। ८ ।।**

**प्र. - ऋच** इति । न क्षरतीत्य**क्षरम्** । तादृशे **ऋचः** ऋक्छब्दोपलक्षितवेदजातस्य **परमे व्योमन्** परमाकाशे परमतात्पर्यविषये यस्मिन्नक्षरे सर्वे **देवाः** समाश्रिताः, तत् अक्षरं यो न वेद; स अधीतेन ऋग्वेदादिना किं करिष्यति? 'स्थाणुरयं भारवाहः (हारः) किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' । 'एतद्वै तदक्षरं गार्गि अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद् भवतीति' (बृ.उ.५-८-८) श्रुतेः । ये च तदक्षरं जानन्ति, ते निरस्तप्रतिकूलाः सुखमासते इत्यर्थः । इमं मन्त्रं विश्वदेवशब्दितनित्यसूर्याश्रयपरमस्थानपरतयापि योजयन्ति । 'तदक्षरे परमे व्योमन्' (तै.ना.१-२) इत्यस्य वेदार्थसङ्ग्रहे स्थानपरतया योजितत्वात् ।। ८ ।।

**आ.भा. -** तत्त्वतः परमपुरुषाश्रयणाऽभावे वेदादिनिखिलशास्त्राध्ययनत्वादिकं नैष्फल्यं प्रतिपादयति - **ऋच** इत्यादि । यस्मिन्नखिलाधारे **विश्वे देवाः** समस्तदेवसमूहा ब्रह्मा प्रभृतिका अधिनिषेदुः समवस्थिताः सन्ति 'यस्मिन्नोतञ्च प्रोतञ्च' (शाण्डि.२-१-२) 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' (भ.गी.७-७) इत्यादिश्रुतिस्मृत्युक्तेः । तस्मिन्नखिलाधारेऽ**क्षरे** नक्षरतीत्यक्षरोऽविनाशी सदैकस्वरूपे **परमे व्योमन्** परमदिव्यधामश्रीसाकेताभिधेयम् । **ऋचः** सम्पूर्णाभगवत्स्वरूपप्रतिपादका वेदाः समवस्थिताः सन्ति अक्षरपदं श्रीसाकेताधिनायकपरं तल्लोकबोधकतया वा नेयं तत्स्वरूपं यो मनुष्यवर्गो न विजानाति सः समवधीनेनापि **ऋचा** वेदसमूहेन किं **करिष्यति** वेदाद्यध्ययनफलसर्वेश्वरश्रीरामस्वरूपज्ञानं तदभावे तद्व्यर्थमेवेत्यर्थः । 'एतद्वैतदक्षरं गार्गि अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति' (बृ.उ.५-८-८) इति श्रुत्युक्तेः । 'स्थाणुरयं भारवाहः किलाभूदधीत्यवेदं न विजानाति योऽर्थम्' इत्याद्युक्तेश्च । **इत्** परन्तु ये जना **तत्** परमब्रह्म श्रीराममक्षरपदबोध्यं -

'राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम्' ।। (राम.र.उ.१-६) इति श्रुतिप्रतिपादितं विदुस्ते चेमे विधिवदधीत्ययथोक्तदिशा श्रीरामोपासका समासते निरस्ताखिलप्रतिकूलाचारणतया सुखमासते स्वलक्ष्यभूतपरस्वरूपप्राप्त्या कृतकृत्यो भवतीत्यर्थः ।। ८ ।।

**छन्दांसि यज्ञाः क्रतवो व्रतानि**
**भूतं भव्यं यच्च वेदा वदन्ति ।**
**अस्मान्मायी सृजते विश्वमेतत्**
**तस्मिँश्चान्यो मायया संनिरुद्धः ।। ९ ।।**

**प्र. - छन्दांसीति** । वेदं वैदिकमर्थजातं मायाप्रेरकः परमात्मा अस्मात् मायाशब्दितात् साधनात् सृजते । अतश्च अपरिणामिनोऽप्युपादानत्वमविरुद्धम् । ननु जीवस्य स्रष्टृत्वं किं न स्यात् इत्याशङ्क्याह - **तस्मिंश्चान्यो मायया संनिरुद्धः । अन्यो** जीवः तदाश्रितमायामोहितः । अतः तस्य मायाप्रेरकत्वाभावान्न स्रष्टृत्वमिति भावः ।। ९ ।।

**आ.भा. -** इतः पूर्वमन्त्रे किमृचा करिष्यतीति श्रवणाद्वैयर्थ्यशंकायामाह - **छन्दांसी**त्यादि । **छन्दांसि** समस्तवेदमन्त्रस्वरूपछन्दप्रभृतयो **यज्ञाः क्रतवो** ज्योतिष्टोमादिविशेषाः । **व्रतानि** नाना प्रकारका शुभसंसूचकाः सदाचारप्रभृतयस्तथान्ये च ये केचन **भूतं** समवतीतं **भव्यं -** भविष्यत्कालसंभाव्यं वर्तमानकालोपलक्षितं वा **वेदा** वदन्ति । एत**द्विश्वं** प्रत्यक्षतया समवलक्षितमखिलमपि जगत् **मायी** प्रकृत्यधिपति-परमेश्वरोऽस्मात्पूर्वनिर्दिष्टान्महाभूतादितत्त्वसमूहात् **सृजते** स्वस्वप्राक्तनकर्मान्नुपलक्ष्य यथायथं समुत्पादयतीत्यर्थः । 'विकारश्च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातञ्च नेति । प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्य कर्म' इत्याचार्योक्तेः । न चात्र जीवस्यैव तथास्रष्टृत्वं संभवत्यत आह - **तस्मिंश्चान्य** इति । **अन्यो** जीवः सर्वेश्वरश्रीरामाश्रितमायया **संनिरुद्धः** सम्यक्तया मोहितस्ततश्च तन्मायाप्रेरकत्वाभावान्न सृष्ट्यादिकार्ये **समर्थः** 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' (ब्र.सू.४-४-१७) इति सूत्रकारोक्तेः 'जगद्व्यापारवर्जं समानो ज्योतिषा' इति तद्व्याख्यायां श्रीपुरुषोत्तमाचार्यचरणोक्तेश्च ।। ९ ।।

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**
**तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।। १० ।।**

**प्र. -** माया नाम का? तत्प्रेरकश्च क इत्यत्राह - **मायां तु** इति । त्रिगुणात्मिकां **प्रकृतिं** विचित्राश्चर्यसर्गहेतुतया मायाशब्दितं विद्यात् । मायाप्रेरकस्तु महेश्वर इति विद्यात् इत्यर्थः । न च महेश्वरशब्दो देवतान्तरवाचक इति शङ्क्यम् । तैत्तिरीयके -

'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य य परः स महेश्वरः' ।। (तै.ना.१२-३)

इत्यकारवाच्यस्यैव नारायणस्य महेश्वरशब्दार्थत्वाभिधानादिति द्रष्टव्यम् । तस्यापृथक्सिद्ध-विशेषणतया तदंशभूतैर्जीवैः सर्वमचेतनं व्याप्तम् इत्यर्थः । ततश्च जगदन्तर्गताः तदपृथक्सिद्धविशेषणतया तदंशभूता इत्यर्थः ।। १० ।।

**आ.भा. -** पूर्वतनमन्त्रेषु 'अजा' 'माया' 'मायी' इत्यादिकं संश्रुत्य का माया? कश्चमायीति संजातशङ्काऽपकरणायाऽह - **मायां**मित्यादि । **मायां** सत्वरजस्तमत्रिगुणात्मिकां प्रकृतिमेव यतस्तस्या विचित्राश्चर्यजनकानन्तसृष्टिकारणत्वान्मायापदभाक्त्वं **विद्यात्** तथैव **मायिनं** मायायाः अन्तर्यामितया नैरन्तर्यप्रेरकस्तु **महेश्वरं** सर्वान्तर्यामिरूपेणावस्थितं परपुरुषं विद्यात् -

'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' ।। (भ.गी.१५-१७) इत्युक्तेः । न चात्रदेवतान्तरवाचकत्वेन भाव्यं महेश्वरशब्दस्य 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' -

'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' ।।

'दैवी ह्येषा गुणमयी मम माया' (भ.गी.७-१४) 'य एकोऽवर्णो...... विश्वमादौ स देवः' (श्वे.उ.४-१) इत्याद्युक्तेः परपुरुषवाचकत्वस्यैव जागरूकत्वात्तस्य। तस्यावयवभूतैस्तस्यैवा-पृथक्सिद्धविशेषणरूपतया तस्यैवांशभूतर्ममेवांशो जीवलोके जीवभूतः सनातनः इत्युक्तेस्त-दंशभूतैर्जीवैरिदं **सर्वं** निखिलं **जगत्** सर्वमचेतनभूतं विश्वं **व्याप्त**मित्येतत् 'रामो ब्रह्म परात्परं श्रुतिमतं भक्त्यैव निःश्रेयसं । शेषा येन च शेषिणो रघुपते जीवा' इति स्वीकृतम् इत्याद्युक्तेः सकलेशितुः शेषिणः श्रीरामस्य शेषभूतभूतवर्गैः सर्वव्याप्तमित्यर्थः ।। १० ।।

**यो योनिं योनिमधितिष्ठत्येको**
**यस्मिन्निदं सञ्च विचैति सर्वम् ।**
**तमीशानं वरदं देवमीड्यं**
**निचाय्येमां शान्तिमत्यन्तमेति ।। ११ ।।**

**प्र. - यो योनिमिति ।** **योनिशब्देन** जगद्योनिभूता प्रकृतिः उच्यते इति व्यासार्यैर्व्याख्यातम् । न च तथा सति तस्या एकत्वात् वीप्सानुपपत्तिरिति शंक्यम् - महदादीनामपि पञ्चभूतात्मकजगद्योनित्वेन वीप्सोपपत्तेः । ततश्च जगद्योनिभूतान् प्रकृतिमहादादीन् **योऽधितिष्ठति,** यस्मिंश्च विश्वमेतत् उत्पत्तिकाले वियदादिरूपेण **व्येति** - वैविध्यम् एति; संहारकाले च **समेति** - ऐक्यं गच्छति । तादृशम् आश्रिताभीष्टदायिनं तमेव दर्शनसमानज्ञानेन विषयीकृत्य रागद्वेषादिप्रागभावासहकृततत्वलक्षणात्यन्तिकत्वोपेतां

श्रुत्यादिसिद्धां सर्वानर्थशान्तिमाप्नोतीत्यर्थः । **यस्मिन्निदं सञ्च विचैति सर्वमिति** प्रतिपाद्यमानमुपादानत्वं निर्विकारस्य आत्मनः कथमिति शङ्कावारणाय, **योनिं योनिमधितिष्ठति** इति प्रकृत्यादिशरीरकत्वादुपपद्यत इति शिष्यानुग्रहार्थं पुनः पुनः कथनमिति द्रष्टव्यम् ।। ११ ।।

**आ.भा. -** 'एकोऽहं बहु स्याम्' (छां.उ.७-२-३) इतिश्रुतिसमर्थित-बहुरूपापन्नदेवशब्दाभिधश्रीरामं ज्ञात्वैव मुक्तिं समर्थयन्नाह - **यो योनिमित्यादि । यः** एकः समाभ्यधिकविवर्जितः **सर्वेश्वरः** श्रीरामः -

'आवां तौ हि यतः कश्चिन्नाधिको न च यत्समः ।
सर्वात्मानौ मतौ चावां सर्वेषां प्रेरकौ तथा' ।।

इत्याद्यागमोक्ते योनिं जगद्योनिभूतां स्वप्रकृतिं योनिं पञ्चभूतात्मकजगद्योनि-संभूतमहदादिकम**धितिष्ठति** सर्गकाले जगद्योनिरूपस्वप्रकृत्या तत्तत्स्वरूपमादत्त इत्यर्थः 'यतो वै इमानि भूतानि जायन्ते' (तै.आन.३-१) इतिश्रुतेः । **यस्मिन्** सर्वाधारभूते परेशे इदं परिदृश्यमानमनुभूयमानं वा सर्वम् अखिलमपि जगदुत्पत्तिकाले वियदादिस्वरूपेण **व्येति** विवधतामेति स्थावरजङ्गमादिरूपेणानन्तप्रकारको भवतीत्येतत् । उपसंहारकाले च समेति स्वस्वरूपत्वेनैक्यं समाप्नोतीत्यर्थः ।

'सर्वभूतानि कौन्तेय? प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसजाम्यहम्' ।। (भ.गी.९-७)
'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्' ।। (भ.गी.९-८)

'मनसैव जगत्सृष्टिं संहारं च करोति यः' । इत्यादिस्मृत्युक्तेः । **तम्** प्रकृतं समाश्रिताभिष्टप्रदायिन**मीशानं** सर्वनियन्तारं वरदं स्वशरणापन्नजनेभ्योऽभीष्ट-प्रदायकमीड्यं संस्तुतियोग्यं सर्वेश्वर श्रीरामं -

'यस्यामलं नृपसदस्तु यशोऽधुनापि, गायन्त्यघघ्नमृषयोदिगिभेन्द्रपट्टम् ।
तं नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं शरणं प्रपद्ये' ।।

इत्याचार्यशिरोमणिभगवद्व्यासोक्तेः । प्रकृतश्लोकव्याख्यायां श्रीशुकार्यमतदीपिकाया-माचार्यप्रवरश्रीगङ्गाधराचार्यचरणास्तु मर्यादापुरुषोत्तमस्य लीलाप्रयोजनमतिसमासेन प्रदर्शयन् स्वशरण्यत्वाच्छरणं गच्छति - यस्यामलमिति । यस्य श्रीरामचन्द्रस्यामलमघघ्नं पापनाशकं पादाम्बुजं तत्सम्बधिरेणुं नृपाणां युधिष्ठिरप्रभृतीनां सदस्सु ऋषयो मार्कण्डेयप्रभृतयो यशोऽधुनापि गायन्ति यद्यशोदिगिभेन्द्राणां पट्टवदाभरणस्वरूपेण तत्पर्यन्तं व्याप्तं नाकपालदेवा

वसुपालास्तेषां किरीटैर्जुष्टं पादाम्बुजं यस्य तं रघुपतिमखिलजीवशरण्यं शरणं प्रपद्ये । यद्वा नास्त्यकं यस्मिन् स ,नाकः सत्यलोकस्तदधिष्ठातृदेवो ब्रह्मा वसुशब्दश्च धनभूतपशूपलक्षकस्ततश्च पशुपतिः शंकरस्तयोरिति योज्यम् । रघुपतेरिति पाठे तस्य रघुपतेर्नाकपालादिभिर्जुष्टं पादाम्बुजमिति संयोज्यम् । प्रकृतश्लोकीयतत्त्वन्तु भगवच्छ्रीबोधायनपुरुषोत्तमाचार्यचरणप्रसादित -

**[श्रीरामतत्त्वम्]**

स्वां दत्त्वा भरतं कृपापरवशो योऽन्वग्रहीत्पादुकां
गत्वाऽरण्यपथादवाग्दिशमथो दूरे पथोव्युत्थि तान्!
लोकत्राणकृते रणे नरभुजोऽरं न्यग्रहीदग्रही
साकेते स विराजते जनकाप्राणः शरण्यः सताम् ।। १ ।।

भक्तो दुष्कृतमेव मे न कुरुते यत्तत्कृतं तत्समं
वात्सल्यादिदमाह सागरसुतोपालम्भमुन्मूलयन् ।
योऽसौ दिव्यगुणाकरो मुदिररुग् हेयप्रहीणः प्रभुः
सेव्यः सद्भिरभीतिदो दशशिरः संहारकृन्नापरः ।। २ ।।

पश्येदं बलवल्लसन्मम धनुर्दुःक्षत्रगोत्रान्तकृत्
सार्धोग्रंकिल जामदग्न्यमजयद् योऽनुग्रहैकाशयः ।
विश्वामित्रमखावनप्रयतितो बालोऽपि कल्पानल
प्रख्योऽहन्निह ताटकां स भगवान् रामः प्रणम्यो न कैः? ।। ३ ।।

दत्तानुज्ञ उदन्तमेत्य निखिलं मात्र सुमित्राह्वया
कैकेय्या सुरमायया हतधियाऽऽदिष्टः सतामाश्रयः ।
कौशल्यां रुदतीं विहाय विपिनं योगात्स्वकृत्यं विद-
न्निष्टानिष्टसमो मनोनिविशते नो कस्यपुण्यात्मनः? ।। ४ ।।

साम्राज्यं महदप्यखिन्नमनसा भ्रातर्य्यधीनं कृतं
विख्या शूर्पणखाकृता विपथगा बद्धौऽम्बुधिर्नीलवाः ।
राज्यं प्राज्यमदाद्विभीषणकृते हत्वा दशास्यं द्रुहं
रामः सोऽयमलौकिकीकृतिपटुर्भक्तप्रियः सेव्यताम् ।। ५ ।।

विश्वेषामवनो जगत्कृतिपटुः कल्पान्तकालाश्रयी
नैकावासनिवासकृच्छ्रितजनानर्थच्छिदे देहभाक् ।
सुक्ष्मस्थूलजडाजडात्मकतनुस्तत्रावतीर्णोऽपि सन्
ज्ञेयः सर्वविलक्षणोऽद्भुतगती रामः कथं तत्त्वतः? ।। ६ ।।

भक्तेभ्योऽन्यजनैरनाप्यमतुलं दिवं ददद्विग्रहं
सर्गासर्गतनुग्रहादिविधिषु ज्ञेयः स्वकैर्ज्ञापितैः ।
सन्तुष्टः कपिसेवयापि तुलसीमालोपशोभीविभू
रामो धर्मतनुस्सहस्त्ररसनैर्वर्ण्यो न शेषैरपि ।। ७ ।।

कालो रावणमातुलस्य सरुषं सृष्टेन वार्धेरपा
मत्युत्तापकरः शरेण शरणापन्ने प्रसादातुरः ।
भक्तेभ्यस्तदपेक्षयैव कृपया स्वर्गापवर्गप्रपदो
रामः सैष जयत्युदारसुगुणग्रामो विरामोऽसताम् ।। ८ ।।

उल्लालोर्जितवारिधौ कृतपथः सैन्यैः कपीनां पुरीं
लङ्कामेत्यविनाश्य राक्षसकुलं तीक्ष्णेषुवृष्ट्याऽधमम् ।
ऋद्धं राज्यमदाद्विभीषणकृते चित्रं चरित्रं श्रितो
रामः श्रीपुरुषोत्तमोविजयते माङ्गल्यमूर्तिः प्रभुः ।। ९ ।।

छित्वैकेषुनियोगतो द्रुमवरान् सप्ताञ्जसा बालिनं
हत्वाऽतूतुषदाशु शङ्कितहृदंभीतं कपीनां पतिम् ।
सुग्रीवं सहृदं प्रपन्नमसतां नाशेऽनिशं सोधमः
स्वोद्धाराय सतां स एव भगवान् सेव्यः परेभ्यः परः ।। १० ।।

त्राता सुन्दरदीर्घदृक् क्षितिसुता हत्वाऽमितान् राक्षसा
नार्ताऽशोकवनं गता स्मृतिपराऽनन्याश्रयाऽङ्गीकृता ।
तद्वन्मां शरणागतं रघुपते! दीनावनैकव्रत?
स्वीकुर्वाशु विनाथनाथ? दययोपेक्षस्व मा मा प्रभो? ।। ११ ।।

प्राणा देहिषु शेमुषी शुभतमाऽथाऽसत्तमाऽधि त्वयि
त्वञ्चैवाऽसि विभोऽस्ति यच्छुचितमं गव्यं च पञ्चामृतम् ।
अध्यास्से च विभूतिषूत्तमगुणाधारोऽपि नित्यादिषु
शेषास्तेऽब्धिभवांश्च रत्ननिचया दासोऽहमीशो भवान् ।। १२ ।।

बाणैश्चूर्णयिताऽस्त्रपान् दृढतनूंल्लोहादपि प्रोद्धता
निक्षोर्यष्टिरिवाऽनिशं नतजनेष्वाद्यन्तमाधुर्यवान् ।
रोलम्बाञ्चितशीतलाच्छतुलसीहाराभिराम? प्रभो?
राम? त्वत्पदपद्ममात्रहृदयं दासं दयस्व स्वकम् ।। १३ ।।

क्षीराब्धौ निजसेवकेन कपिना क्षारीकृतां प्राक्पुरीं
लङ्कामेत्य समित्यभद्रमधियं हन्ताऽऽशराणां शरैः ।
श्रीरामो विजयी विभीषणमधाद् दास्ये पदे निर्भये
भक्त्या सन्निहितस्य तस्य न भयं क्रूरात्कृतान्तादपि ।। १४ ।।

सोढ्वा दुःखानि नानाऽतिविषमविषयक्ष्वेडसङ्गात्सुखेच्छू
रात्रौ भुङ्क्त्वा शयानोऽप्यवहितहृदयो गात्रपोषेऽमतिर्यः ।
धिक् धिक् कुक्षिं भरिं तं सकलगुणनिधिं तौलसेयीसनाथं
भक्त्या संसेव्य लभ्यं परतरममृतं मौर्ख्यतो हा जहाति ।। १५ ।।

शास्त्राऽऽसेवारतास्तेऽतुलविमलधियोलब्धतत्त्वावबोधाः
श्रेयः प्रत्यर्थिभूतं कुमति कुलमतं श्रोतुमर्हा न मन्तुम् ।
एको देवः सरामः शपथ इहमयाऽत्युग्रशस्त्रप्रहारै-
श्छिन्नं न स्याच्छिरोमे मरणमपि न मे द्वापरो नात्र कोऽपि ।। १६ ।।

कोदण्डेनाऽतुलेनोल्लसितमृदुशयः सेतुबन्धेन सिन्धौ
गत्वा लङ्कां समेषां शुभकृतिमतिमानादरी घोरयुद्धे ।
पत्युर्हन्ताऽस्रपाणां परतरमहिमा राजतेदिव्यमूर्तिः
साकेते नेक्षितस्तं भजति करुणया तेन गर्भादभाग्यः ।। १७ ।।

भक्तिर्नोचेन्न साऽस्तु द्विषमपि सभिया नो यथा रावणादिः
सीतेशस्तावतापि प्रसृमरदयया त्वां विदध्यात्स्वकीयम् ।
वाचा तन्वा हृदा वा यदि नहि भजसेऽशक्तितो ज्ञानतो वा
दृष्ट्वास्या दिव्यमूर्तिं परमसुखमयः प्राप्त एवाऽसि रामम् ।। १८ ।।

आनीयानीयशैलाञ्जलनिधिसलिलेन्यस्यतो वानरेन्द्रान्
सेतोर्हेतोः सुभक्त्या सपदि रघुपतेः प्रीतिपात्राणि दृष्ट्वा ।
सेवावेशाज्जलाद्रैस्तनुतनुरसकावङ्गकैर्धूलिमस्यञ्
जन्तुर्जातः कृतार्थो जभतमुहूरमुंराममेकं दयालुम् ।। १९ ।।
विश्वामित्रस्य यज्ञान्नरवरवपुषा वारयन् राक्षसान् यः
स्नानं सम्पादयन् प्रागवमृथमनघंख्यातकीर्तिर्जगत्याम् ।
तेषां तेषां खलानां निखिलजनिमतां पीडनातत्पराणां
नाशयाऽऽकृष्ट चापोऽद्भुतकृतिनिपुणःसेव्यतां सोऽखिलेशः ।। २० ।।

इत्यादिश्रीरामतत्त्वानुसन्धायकश्रीरामतत्त्वाद्यनेकदिव्यप्रबन्धतोऽनुसन्धेयो विशेषार्थिभिः इत्यादिकं संगिरन्ति । तदेव सर्वतोभावेन निःश्रेयसाय सर्वजनसेवनीयं **देवं** देवशब्दवाच्यं परमेश्वरं श्रीरामं निचाय्य दर्शनसमानाकारस्वरूपज्ञानेन स्वविषयीकृत्योपासकोऽत्यन्त-सर्वतोभावेन रागद्वेषादिरहितत्वे स्थायित्वमापन्नामिमां श्रुतिस्मृत्यादिभिः **परिपुष्टां** मुक्तिपदाभिलप्यां **शान्तिं** परमश्रेयोरूपाम् एति समवाप्नोतीत्यर्थः । श्रीरामशरणागतिं विहाय नैरन्तर्यशान्तिलाभाभावो जीवानामिति तात्पर्यार्थः ।। ११ ।।

**यो देवानां प्रभवश्चोद्भवश्च**
**विश्वाधिपो रुद्रो महर्षिः ।**
**हिरण्यगर्भं पश्यत जायमानं**
**स नो बुद्ध्या शुभया संयुनक्तु ।। १२ ।।**

**प्र.** - तज्ज्ञाने तदनुग्रह एव कारणमिति तं प्रार्थयते - **यो देवानामिति** । **यो** देवानां **जायमानं** हिरण्यगर्भम्, असावप्रतिहतज्ञानादियुक्तस्स्यात् इति सानुग्रहम् ऐक्षत । स मां वीक्षतामिति भावः ।। १२ ।।

**आ.भा.** - 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' ।।
(कठ.उ.२-२-३) (मुं.उ.३-२-३) इति श्रुत्युक्तेर्भगवज्ज्ञानोपायपरमपुरुषानुग्रह एवेति **तल्लाभार्थं** प्रार्थयते - **यो देवानामित्यादि** । यः देवानामिन्द्रवरुणरुद्रप्रभृतीनामुद्भवः उद्भवत्यस्मादिति व्युत्पत्तेः **प्रभवश्च** प्रकर्षेण भवतीति प्रकर्षरूपेण देवाधिपतित्वादिकमस्य प्रभवनमिति यावत् 'यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' । (बृ.उ.१-४-११) इति श्रुतेः 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' (भ.गी.९-२४) इति स्मृतेश्च स्वकर्मफलप्रदायित्वरूपप्रभुत्वस्य प्रजापतिपशुपतित्वादिरूपस्थान-संप्रापकत्वस्वरूपोद्भवनस्य च सर्वेश्वरपरमपुरुषाधीनत्वादिति भाव्यम् । **विश्वाधिपः** सर्वस्यापि जगतस्तदेकदेशैकदेशरूपतयाविश्वाधिपत्वम् 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ.गी.१०-४२) इति गीतोक्तेः । **रुद्रः** संसाररुजां संद्रावकत्वाच्च रुद्रपदाभिधेयः परपुरुषो महर्षिरतिशयसार्वज्ञत्वादिगुणविशिष्टतया महर्षिपदभाक्निखिलेश्वरोऽस्ति येन प्रथमं **जायमानं** समुद्भूतं **हिरण्यगर्भं पश्यत** 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.उ.६-१५) 'सृष्ट्यादौ च सिसृक्षुः श्रीरामो विधिं विधाय हि । सृष्टये

प्रेषयामास वेदं ज्ञानमहानिधिम्' इत्यादिरूपेण श्रुतिस्मृतिप्रतिपादितदिशा मद्विसृष्टोऽयं स्वकर्मणि कृतमनोरथः स्यादिति सानुग्रहं समुदैक्षत । सः परमेश्वरो न **शुभया** बुद्ध्या दिव्यमाङ्गल्यभावनया साबुद्ध्येत्यर्थः **संयुनक्तु** संयोजतु स्वस्याहेतुक्या करुणया दृष्ट्या मां समववीक्षतामिति भावः ।। १२ ।।

**यो देवानामधिपो यस्मिन् लोका अधिश्रिताः ।**
**य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ।। १३ ।।**

**प्र. - यो देवानामधिप** इति । सर्वचिदचित्प्रपञ्चशेषिणे सर्वाधारभूताय सकलनियन्त्रे तस्मै परमात्मने पुरोडाशादि **हविषा** पूजां कुर्वीमहीत्यर्थः । यज्ञादिभिः तदाराधानं तदुपासनद्वारा तत्प्राप्तिसाधनमिति भावः ।। १३ ।।

**आ.भा. -** प्रार्थनाप्रकारमेव प्रपञ्चयति - **यो देवानामधिप** इति । **यो** देवानामधिपः अखिलचिदचित्प्रपञ्चजातस्याधिपतिर्यस्मिन् सकलाधारभूते परब्रह्मणि **लोका अधिश्रिताः** सर्वतोभावेन जनाः समाश्रिताः सन्ति -

'सर्वस्याधारभूतौ च त्वावामेवहि मारुते? ।
स्वेमहिम्नि स्थितावावामन्याधारो न चावयोः' ।। इत्यागमोक्तेः । यश्चास्य सर्वव्यवहारभूतद्विपदश्चतुष्पदश्च समस्तजीवसमूदायस्येशे शासनकर्ताऽस्ति सम्पूर्णचिदचिद्वर्ग-नियन्तेत्यर्थः । **कस्मै देवाया**ऽऽनन्दस्वरूपाय सर्वशेषिणे वयं **हविषा** पुरोडाशादिना श्रद्धाभक्तिपूर्वकप्रस्तुतेनाऽन्येन वा पूजोपकरणद्रव्यदिव्यस्तुतिपाठादिना विधेय पूजां सम्पादयमामः । 'यज्ञो वै विष्णुः' -

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु' ।। इति श्रुतिस्मृतितो यज्ञो विष्णुः सर्वव्यापकः श्रीराम इत्यवगम्यते ततश्च तदाराधनात्मकं पुरोडाशादिसमर्पणात्मकं तदुपयोगात्मकमन्यमपि सर्वं प्रेमोत्साहपूर्वकं श्रीरामसायुज्यसम्प्राप्तये परेशकैङ्कर्य-बुद्ध्या समाराधयाम इत्यर्थः ।। १३ ।।

**सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये**
**विश्वस्य स्रष्टारमनेकरूपम् ।**
**विश्वस्यैकं परिवेष्टितारं**
**ज्ञात्वा शिवं शान्तिमत्यन्तमेति ।। १४ ।।**

**प्र. - सूक्ष्मातिसूक्ष्म**मिति । सूक्ष्मवस्तुष्वपि अन्तःप्रवेशयोग्यं कार्यब्रह्माण्डमध्ये हिरण्यगर्भप्रजापत्याद्यनेकरूपेणावस्थाय **विश्वस्रष्टारं** सर्वान्तर्यामित्वेऽप्यनवद्यमद्वितीयं परमात्मानं **ज्ञात्वा** मुक्तो भवति इत्यर्थः ।। १४ ।।

**आ.भा. -** श्रुतिस्मृत्यादिविहितभगवत्कैंकर्यबुद्ध्या समाराधितकर्मफलमाह - **सूक्ष्मातिसूक्ष्मम्** इत्यादि । सूक्ष्मरूपेण प्रसिद्धपरमाणोरप्यन्तःप्रवेशयोग्यमत्यन्त-सूक्ष्ममणोरणीयानिति श्रुतेः **कलिलस्य मध्ये** स्थितमन्तर्यामितया प्रतिजीवहृदयगुहाद्यनेक-स्थाने समवस्थितमित्येतत् । विश्वस्याखिलब्रह्माण्डस्य प्रजापतिहिरण्यगर्भाद्यनेक-रूपेणावस्थाय तत्तदानुकूल्यप्रतिकूल्येनस्रष्टारं प्राक्तनकर्मानुगुण्येन सर्वसर्जकमनेकरूपमनन्त-स्वरूपमनन्तरूपधारकमित्यर्थः । **विश्वस्य परिवेष्टितारम्** अन्तर्यामित्वेन सर्वतः 'सर्वव्याप्तमोतञ्च प्रोतञ्च', 'सर्वतः स्पृत्वा, विश्वतः स्पृत्वे'त्यादिश्रुतेः । एतादृशापूर्वस्वरूपमेकमद्वितीयं स्वसमाभ्यधिकविवर्जितमित्येतत् । **शिवं** सर्वकल्याणस्वरूपं परमात्मानं ज्ञात्वा याथार्थ्येन समवधार्योपासको जीवसमूहो **अत्यन्तं शान्तिमेति** पुनरावृत्तिविवर्जितां शाश्वतिकीं मुक्तिं समवगच्छति -

'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः' ।। (भ.गी.८-१५)
आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन? ।
मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते । (भ.गी.८-१६) इति गीतोक्तेः -
सत्यसन्धः प्रतिश्रुत्य प्रपन्नायाभयं स्वयम् ।
निवर्तयेद्भये नैनं श्रीरामः श्रितवत्सलः ।। इत्याद्याचार्योक्तेश्च ।। १४ ।।

**स एव काले भुवनस्य गोप्ता**
**विश्वाधिपः सर्वभूतेषु गूढः ।**
**यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च**
**तमेवं ज्ञात्वा मृत्युपाशाँश्छिनत्ति ।। १५ ।।**

**प्र. - स एव काल** इति । ब्रह्मविदो मुनयो देवताश्च यत्र मनो योजयन्ति; **स एव** परमात्मा कर्मपरिपाककालविशेषे जगतः **गोप्ता** - संसारमोचकः, कुतः? **विश्वाधिपः - सर्वभूतेषु गूढः** । सर्वशेषित्वात् सर्वान्तर्यामित्वाच्च इत्यर्थः । शेषशेषिभावशरीरात्मभाव-सम्बन्धसत्वात् तादृशस्य शक्तस्य मोचकत्वौचित्यादिति भावः । **तमेव**मिति । अनेनाऽऽकारेण **तं** जानन् दर्शनसमानाकारज्ञानेन विषयीकुर्वन् मुक्तो भवति इत्यर्थः ।। १५ ।।

**आ.भा. -** पूर्वमन्त्रोदितमेवसमर्थयति - **स एव काल** इत्यादि । **स एव** जगद्योनिरखिलविश्वस्याभिन्ननिमित्तोपादानकारणभूतसर्वेश्वरश्रीरामः **काले** सर्वजीवकर्म-परिपाकसमये **भुवनस्य गोप्ता** समस्तब्रह्माण्डस्य संरक्षको**विश्वाधिपो**ऽखिलजगतोऽधिपतिः **सर्वभूतेषु गूढः** सर्वप्राणिसमुदायेषुनिगूढश्च**ास्ति** सर्वशेषित्वात्सर्वान्तर्यामितया सर्वसमवाप्य संतिष्ठत इत्यर्थः । **यस्मिन्ने**तादृशमहिम्नि सर्वलोकशरण्ये श्रीरामे **ब्रह्मर्षयो**ऽखिलवेद तत्त्वज्ञमहर्षिगणाः **देवताश्च** ब्रह्मादिदेवगणा अपि -

'यस्यामलं नृपसदस्सु यशोऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ।
तं नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं शरणं प्रपद्ये ।।
ध्येयं सदा परिभवघ्नमभीष्टदोऽहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्' ।

इत्याद्युक्त्या स्वश्रेयसे युक्ताः सर्वदा ध्यानाभ्यासादिना संलग्नाः सन्ति शेषशेषिभावसम्बन्धत्वेन-सर्वेशाराधने सर्वदा प्रशक्ता भवन्ति तस्यैव सर्वमोचकत्वादित्यर्थः । यतस्तमुक्तस्वरूपं परमात्मानमेवमुक्तप्रकारेण **ज्ञात्वा** दर्शनसमानाकारज्ञानविषयीकुर्वन् **मृत्युपाशान्** 'जायस्व म्रियस्वे' (छां.उ.५-१०-८)ति सूचितमरणधर्मत्वादिबन्धनान् **छिनत्ति** संसारसंसरणभूतान् **पाशान्** संछिद्यसंसारागमनात्सर्वतोभावेन मुक्तो भवतीत्यर्थः ।। १५ ।।

**घृतात्परं मण्डमिवातिसूक्ष्मं**
**ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।**
**विश्वस्यैकं परिवेष्टितारं**
**ज्ञात्वा देवं मुच्यते सर्वपाशैः ।। १६ ।।**

**प्र. - घृतात्**[1] इति । यथा घृतस्य सारांशः सूक्ष्मः क्षीरव्यापी एवं सर्वत्र सूक्ष्मतया दुर्ज्ञानतया वर्तमानात्वेऽप्यनवद्यतया मङ्गलभूतं भगवन्तं **ज्ञात्वा मुक्तो** भवतीत्यर्थः ।। १६ ।।

**आ.भा. -** अनवद्यत्वरूपेणातिसूक्ष्मतया सर्वं समव्याप्यस्थितं परस्वरूपं ज्ञात्वैव मुक्तो भवतीत्याह - **घृतात्परमि**त्यादि । **शिवं** - सर्वकल्याणस्वरूपमेकं देवमद्वितीयत्वेन वर्तमानं सर्वेशं **घृतात्परमति** सूक्ष्मतया सारांशभूतसर्वक्षीरव्यापीमण्डमिव सर्वसूक्ष्मा-सूक्ष्मजडचेतनसमव्याप्य-स्थितम् **अतिसूक्ष्मं सर्वभूतेषु** समस्तचिदचित्पदार्थेषु गूढं

---

१. **घृतात् परं** इति । क्षीरदध्यादौ सूक्ष्मं तत् व्याप्तमेव मण्डं भूत्वा घृतं भवति । अतो घृतात् परम् इति क्षीरादिव्यापनक्षमात् घृतपरिणामादप्युत्कृष्टा पूर्वावस्था उच्यते ।। (इति भाष्यपरिष्कारे)

सर्वान्तर्यामित्वेन विद्यमानं **ज्ञात्वा** विश्वस्य **परिवेष्टितारम्** अखिलं जगत्सर्वतो भावेन समव्याप्यसन्नियमनकर्तारं तत्र तत्र तत्तद्रूपेणावस्थाय तत्तच्छुभाशुभकर्मसु स्वप्राक्तनकर्मानुगुण्येन संप्रवर्तकमित्येतत् ।।

'विकारश्च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातश्च नैति ।

प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्यकर्म' ।। इत्याचार्योक्तेः । **ज्ञात्वा** दर्शनसमानाकारज्ञानविषयं कृत्वेत्यर्थः । जीवः **सर्वपाशैर्मुच्यते** शापवद्बन्धनसाधनीभूतसर्वकर्मतो विमुच्यत इत्यर्थः ।। १६ ।।

**एष देवो विश्वकर्मा महात्मा**
**सदा जनानां हृदये संनिविष्टः ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो**
**य एतद्विदुरमृतास्ते भवन्ति ।। १७ ।।**

**प्र. - एष देव** इति । **विश्वं कर्म -** क्रियते इति कर्म - कार्यं यस्य स तथोक्तः । जगत्कर्ता इत्यर्थः इतरत् उक्तार्थम्[१] ।।

**आ.भा. - एष देव** इत्यादि । **विश्वकर्मा** क्रियते इति कर्म विश्वं कार्यं यस्येत्यर्थः संसारकर्तेत्यतत् महात्मा देवः परमपुरुषः **सदा जनानां हृदये** हृदयप्रदेशे **सन्निविष्टः** सम्यक्तया स्थितोऽस्ति अतो **हृदा मनीषा** बुद्ध्या **मनसा च अभिक्लृप्तः** सम्यग्ध्यानविषयीकृतः सन् प्रत्यक्षो भवति ये साधका **एतन्निगूढतत्वंविदुः तेऽमृताः** अमृतस्वरूपा मरणधर्मव्यापारवर्जिता मुक्ता इत्यर्थः **भवन्ति** ।। १७ ।।

**यदा तमस्तन्न दिवा न रात्रि-**
**र्न सन्न चासच्छिव एव केवलः ।**
**तदक्षरं तत्सवितुर्वरेण्यं**
**प्रज्ञा च तस्मात्प्रसृता पुराणी ।। १८ ।।**

**प्र.** - गायत्रीप्रतिपाद्यत्वमपि तस्यैव इत्याह - **यदा तम** इति । यस्मिन् काले सदसच्छब्दितमूर्तामूर्तप्रपञ्चं दिवारात्रविभागश्चान्तरेण तमोमात्रमवस्थितम्, तस्मिन् काले, 'ब्रह्मादिषु प्रलीनेषु नष्टे स्थावरजङ्गमे । आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् 'एकस्तिष्ठति

---

१. तृतीये त्रयोदशमन्त्रे इत्यर्थः ।।

विश्वात्मा स तु नारायणः प्रभुः'। (महा.भा.शां.प.२१०-२४) इत्युक्तरीत्या ज्ञानसङ्कोचलक्षणाशुभमन्तरेण केवलं शुभतयाऽवस्थितम्; तदेव क्षरणशून्यं वस्तु; सवितृमण्डलमध्यवर्ति[१]; **वरणीयं** भजनीयञ्च तदेव । तस्मादेव हेतोः सृष्टिकाले प्रज्ञानां सङ्कुचितज्ञानस्य नित्यस्य प्रसरणमिति भावः । **प्रज्ञा च तस्मात्** इत्यनेन, 'धियो यो नः प्रचोदयात्' (ऋ.वे.३-४-१०) इत्यशंप्रतिपाद्यत्वमपि तस्यैवेत्युक्तं भवति ।। १८ ।।

**आ.भा.** -

'शरण्यौ वेदनीयौ च भजनीयौ हि मुक्तये ।
वेदवेद्यो जगद्योनिर्मन्निभो राघवो मतः' ।।

इत्यादिरूपेण वशिष्ठसंहितायां जगज्जननी सर्वेश्वरी श्रीसीतायाः प्रतिपादितदिशा वेदवरेण्यशब्दोपलक्षितगायत्रीमन्त्रप्रतिपाद्यत्वमपि पूर्वप्रक्रान्तसर्वेशस्यैवेति प्रतिपादयति - **यदा तम** इत्यादि । **यदा तमो** यस्मिन् समये सदसत्वेन मूर्तामूर्तत्वे प्रपञ्चितं रात्रिन्दिवविभाग-राहित्यतया तमोमात्रं स्थितं -

'सूक्ष्माचिच्चिद्द्वयेनावां विशिष्टौ प्रलये किल ।
सृष्टावावां विशिष्टौ तु स्थूलाचिच्चिद्द्वयेन हि' ।। इत्यागमोक्तेऽत्र तमः शब्दप्राग्वर्णितमायापदबोधकोऽवसेयः प्रलयकालेऽपि स्थायित्वात् तस्याः तत् तदा तस्मिन् काले प्रणष्टे स्थावरजङ्गमे ब्रह्मादिषु परब्रह्मणि श्रीरामे प्रलीनेष्वित्यर्थः । **न दिवा न रात्रिर्न सन्** नचासनित्यादिपदप्रयुक्तव्यवहारो भवति परञ्च तदा केवलः शिव एव सर्वदा संकुचित ज्ञानमहिमा कल्याणगुणगणगुम्फितः सर्वशरण्यः सर्वेश्वरो जगद्योनि श्रीराम एवास्ते तच्चाक्षरं क्षरणगुणधर्मरहितं सदैकरूपं स्वभावञ्चेत्येतत् । तदेव च **संवितुः** सर्वान्तर्यामित्वेन सवितृमण्डलमध्यवर्त्तित्वात् सूर्यब्रह्मादिसर्वदेवानां **वरेण्यं** वरणीयं समुपासनीयं भजनीयञ्चेत्यर्थः । तस्मात्पूर्वप्रपञ्चितपरेशादेव संकुचितज्ञानवतां प्रजानां सृष्टिकाले **पुराणीप्रज्ञा** नित्यं ज्ञानमनादीत्येतत् धर्मभूतज्ञानस्य नित्यत्वावगमात् 'न विज्ञातुर्विज्ञातेविपरिलोपो विद्यते,' (बृ.उ.४-५-१४) अविनाशी वा अरे अयमात्मा

---

१. तदुक्तं -

'ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणस्सरसिजाननसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुः धृतशङ्कचक्र' ।। इति ।

अनुच्छित्ति धर्मा' (ऋ.वे.३-४-१०) इत्यादि श्रुत्युक्तेः । गायत्रीमन्त्रपठित 'धियो यो नः प्रचोदयात्' इत्यंशप्रतिपादनपरत्वेन नेयमत्रत्य प्रज्ञा च तस्मादितिपदम् यतः श्रीरामस्यैव सर्वप्रेरकत्वात् । **प्रसृता** पारम्पर्येणाऽवच्छिन्नाचार्यगत्या प्रसरणमवाप्तेत्यर्थः 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.उ.६-१-८) '**सृष्ट्यादौ च** सिसृक्षुः श्रीरामो विधिं विधाय हि । सृष्टये प्रेषयामास वेदं ज्ञानमहानिधिम्' इति श्रुतिस्मृत्युक्तेः ।। १८ ।।

**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।**
**न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ।। १९ ।।**

**प्र. - नैन**मिति । **ऊर्ध्व**स्थाण्वादिरूपतया, पश्वादितिर्यग्रूपतया तदुभयविलक्षण-मनुष्यादिरूपतया सन्तमत्येनं कोऽपि जनः **परितः** सम्यक् समन्तात् **न जग्रभत् -** नाग्रहीत् । यद्वा ऊर्ध्वदेशादिषु न कोपि ज्ञातवान् । **तस्य** विभुत्वादिति भावः । **यस्य महद्यश** इति **नाम** यस्त्वपरिच्छिन्नकीर्तिः प्रसिद्धः, तस्य सदृशं किमपि वस्तु नास्ति इत्यर्थः ।। १९ ।।

**आ.भा. -** ब्रह्मणो गुणतः स्वरूपतश्चापरिच्छेद्यत्वं प्रतिपादयति - **नैनमूर्ध्वमित्यादि ।** एनं सर्वव्यापकपरमात्मानं नोर्ध्वमूर्ध्वत्वेन स्थाण्वादितया वर्तमानं **न तिर्यञ्चं** तिर्यग्त्वेन पश्वादिरूपत्वेन वर्तमानं **न मध्ये** मनुष्यादिस्वरूपेणो-भयविलक्षणस्वरूपेण वर्तमानमपि कश्चिज्जनः **परिजग्रभत्** याथातथ्येन न समन्वग्रहीत् सर्वव्यापकत्वेऽपि ब्रह्मस्वरूपं सम्यग्रूपेण ज्ञातुमक्षम इत्यर्थः । परेशकृपाकटाक्ष-राहित्यात्तदनुग्रहे तु तत्स्वरूपं तत्त्वतोऽनुभविष्यत्येव -

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' ।। (मुं.उ.३-२-३)

इति श्रुत्युक्तेः । ब्रह्मणो विभुत्वादूर्ध्वप्रदेशब्रह्मेन्द्रलोकादिषु विद्यमानात्तत्तदधिष्ठातृदेवविशेषा अपि तत्त्वतो ज्ञातुमक्षमा इति वा योज्यं तेषां जीवकोटिनिविष्टत्वेनाल्पज्ञतया प्रसिद्धेः । **यस्य महद्यशः**

'यस्यामलं नृपसदस्सुयशोऽधुनापि गायन्त्यघघ्नमृषयोदिगिभेन्द्रपट्टम् ।
तं नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपतेः शरणं प्रपद्ये' ।।

इत्यादिरूपेण परमाचार्यश्रीव्यासादिभिः समुपवर्णितनामातिप्रसिद्धमस्ति त्रिजगत्यां **तस्य प्रतिमा** तादृशपुरुषस्योपमानास्ति सर्वातिशायित्वात्तस्य -

'नेदं यशोरघुपतेः सुरयाञ्चयात्त लीलातनोरधिकसाम्यविमुक्तधाम्नः ।
रक्षोवधो जलधिबन्धनमस्त्रपूगैः किं तस्य शत्रुहनने कायः सहायाः'
इतिबादरायणोक्तेः ।। १९ ।।

**न संदृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा हृदिस्थं मनसा य**
**एनमेवं विदुरमृतास्ते भवन्ति[१] ।। २० ।।**

**न सन्दृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो**
**य एनम् (एतत्) विदुरमृतास्ते भवन्ति ।।** (कठ.उ.६-९)

**प्र. - न सन्दृशे तिष्ठति** इति । **अस्य रूपम् -** स्वरूपं विग्रहो वा, व्यापकत्वादेव सन्दर्शनविषये अभिमुखतया न तिष्ठति इत्यर्थः । अथवा दृश्यं नीलरूपादिकं नास्ति इत्यर्थः । अत एव **न चक्षुषा पश्यति कश्चनैनम्** इति । स्पष्टोऽर्थः । **हृदा मनीषा** इत्यादि । अयमंशः, 'सर्वत्र प्रसिद्धोपदेशात् (ब्र.सू.१-२-१) इत्यत्र व्यासार्यैः **हृदा** इति भक्तिरुच्यते । **मनीषा** इति धृतिः । **'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्'** इति पूर्वार्धमेकरूपं पठित्वा, 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह' (महा.भा.१२-२१-६४) इति महाभारते उक्तम् **अभिक्लृप्तः -** ग्राह्यः इति विवृतः । धृत्या समाहितात्मा, भक्त्या पुरुषोत्तमं **पश्यति** साक्षात्करोति प्राप्नोति इत्यर्थः । 'भक्त्या त्वनन्यया शक्यः' (भ.गी.११-५४) इत्यनेनैकार्थ्यात् इति वेदार्थसङ्ग्रहे प्रतिपादितम्; **य एनं विदुः** इति स्पष्टोऽर्थः ।।

**आ.भा. -** अधुना परमपुरुषावबोधाय साधनमुच्यते - **न संदृशे** इत्यादि । **अस्य** परमपुरुषस्य **रूपं** सर्वव्यापकीभूतमन्तर्यामिस्वरूपमप्राकृतदिव्यविग्रह इत्यर्थः । **संदृशे** दृष्टिपथे **न तिष्ठति** दर्शनगोचरतां नायातीत्यर्थः । ततो हेतोः **कश्चनैनं चक्षुषा न पश्यति चक्षुषः** प्राकृतत्वेन कश्चिदपि देवमनुष्यगन्धर्वमनुष्यो वा तादृशेन परेशं द्रष्टुं

---

१. अस्य मन्त्रस्य भाष्यं न दृश्यते । ग्रन्थः पतितः इति भाति । अतः एतन्मन्त्रस्य व्याख्यानं कठोपनिषदः (६-९) रङ्गरामानुजभाष्यात् स्वीकृत्य अत्र दत्तम् ।

नाक्षमस्तस्यन्तर्यामिस्वरूपस्य सर्वव्यापकत्वाद्विग्रहस्य च प्राकृतत्वात् । प्राकृतमिन्द्रियजातमप्राकृतग्रहणाऽसमर्थमित्यर्थः । चक्षुषादिदर्शनसाधननिषेधात् किं परमात्मदर्शनसाधनमिति शङ्कायामाह - **हृदेति ।** हृत्पदमन्त्रहृदयस्थाया बुद्धेर्लक्षकं तथा च भक्तिरूपापन्नाया हृदयस्थयाबुद्ध्या तथा **मनसा** निर्मलस्वान्तेन स्वनियन्त्रकभक्तिरूपापन्नबुद्धिकृतसंस्कारेण चेतसेत्यर्थः । 'मनसा तु विशुद्धेन' (व्या.स्मृ.) 'मनसैवेदमाप्तव्यम्' (कठ.उ.४-११) इत्यादिश्रुतेः । **ये** समुपासकाः **एनं** स्वोपास्यभूतं सर्वेशं श्रीरामं हृदिस्थमन्तर्यामितया स्वहृदये समवस्थितमित्येवंरूपेण **विदुः** साक्षादनुभवन्ति **ते** तादृशाः समुपासका **अमृता भवन्ति** पुनरावृत्तिविवर्जितश्रीरामसायुज्यमाप्नुवन्तीत्यर्थः ।। २० ।।

**[ज्ञानप्राप्त्यर्थं ईश्वरप्रार्थना]**

**अजात इत्येवं कश्चिद्भीरुः प्रपद्यते ।**
**रुद्र यत् ते दक्षिणं मुखं तेन मां पाहि नित्यम् ।। २१ ।।**

**प्र. - अजात** इति । हे संसाररुग्द्रावक! त्वम् । **अजातः** - जननादिलक्षणसंसारहीन इति मत्वा **कश्चित्** - पुरुषापशदः अहं दाक्षिण्यशालि -

'उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम्,
प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरम्,
शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकं' ।। **मुखं प्रपद्यते** - प्रपद्ये - ध्यायामि । **प्रपद्यत** इति पुरुषव्यत्ययः छान्दसः । **तेन** - ध्यानेन **मां नित्यं पाहि** - निरस्तसंसारं कुरु इत्यर्थः । स्तनन्धयप्रजाया अवतरणमुखभूतस्तनवत् अवतरणमुखभूतं चरणारविन्दं प्रपद्य इति वाऽर्थः ।। २१ ।।

**आ.भा.** - पूर्वोक्तरीत्या परब्रह्मस्वरूपं तत्प्राप्त्युपायञ्चोपवर्ण्य परस्वरूपध्यानस्य मोक्षोपायत्वावगमात्तद्ध्यानं कुर्वनभीष्टमर्थयते - **अजात इत्येवम्** इत्यादि । **रुद्र!** सर्वसंसाररुग्द्रावकत्वाद्रुद्ररूप हे सर्वेश श्रीराम!

'ऋतधामा वसुःपूर्वं वसूतां च प्रजापतिः । (वा.रा.यु.कां.११७-७)
त्रयाणामपि लोकानामादिकर्ता स्वयं प्रभुः । (वा.रा.बा.कां.१९-११)
रुद्राणामष्टो रुद्रः साध्यानामपि पञ्चमः ।
अश्विनौ चापि कर्णौ ते सूर्याचन्द्रमसौ दृशौ' ।। (वा.रा.यु.कां.११७-८) अन्ते चादौ च मध्ये च दृश्यसे च परंतपः (वा.रा.यु.कां.११७-९) इत्यादि रूपेण महर्षि

श्रीवाल्मीकिनिर्वचनात्सर्वसर्गस्थित्यन्तकृत्वं श्रीरामस्यैवेति रुद्रत्वं तस्य । त्वमजातः इतरदेवजीवादिवज्जननलक्षणसंहारादिहीन इत्येवं मत्वा कश्चिन्मादृशः संसारानलसंतप्त-स्वकर्मपारिपाकरूपजन्ममरणक्लेशभीरुरहं ते यद् दक्षिणं कल्याणप्रदसर्वाभयस्वरूपं मुखम्

"विकचपद्मदलायववीक्षणं विधिभवादिमनोहरसुस्मितम् ।
जनकजादृगपाङ्गसमीक्षितं प्रणतसत्समनुग्रहकारिणम् ।।
मुनिमनः सुमधुव्रतचुम्बितस्फुटलसन्मकरन्दपदाम्बुजम् ।
बलवदद्भूतदिव्यधनुः शरामहितजानुविलम्बिमहाभुजम् ।।
परार्ध्यहाराङ्गदचारुनूपुरं सुपद्मकिञ्जल्कपिशङ्गवाससम् ।
लसद्घनश्यामतनुं गुणाकरं कृपार्णवं सद्धृदयाम्बुजासनम् ।।
प्रसन्नलावण्यसुभृन्मुखाम्बुजं जगच्छरणं शरणँ नरोत्तमम् ।
शरणं प्रपद्यते उक्तविशेषणविशिष्टं त्वां प्रपद्ये" ।।

समाश्रयामीत्यर्थः । छान्दसत्वात्पुरुषव्यत्ययः । **तेन** च मत्कृतप्रपदनेन भवदभिध्यानेनेति यावत् **मां नित्यं पाहि** -

"सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम । (वा.रा.यु.कां.१८-३३)
सत्यसन्धः प्रतिश्रुत्य प्रपन्नायाभयं स्वयम् ।
निवर्तयेद्भयेनैनं श्रीरामः श्रितवत्सलः" ।। (वा.अर.कां.५६-२) इत्यादिकं

स्वविरुदं स्मरन्नापास्तसंसारं कुरु सर्वाभयप्रदं श्रीसाकेतं प्रदाय मां स्वकिंकरं कुर्विति सानुनयप्रार्थना ।। २१ ।।

**मा नस्तोके[१] मा न आयुषि**
**मानो गोषु मानो अश्वेषु रीरिषः ।**
**वीरान्मानो रुद्र भामितो**
**वधीर्हविष्मन्तः सदसि त्वां[२] हवामहे ।। २२ ।।**

**।। इति चतुर्थोऽध्यायः ।।**

**प्र. - मा न स्तोक** इति । अपत्यपुत्रायुर्गवाश्वादिप्रवणतया मां **मा** हिंसीः । 'रिष हिंसायाम्' (धा.पा.६९४) इति धातुः । हे संसाररुग्द्रावकः । त्वम् अस्मदपचारेण

---

१. मानस्तोके तनये - इति शाङ्करसम्मतः पाठः ।
२. सदमित्वा शाङ्करसम्मतः पाठः ।

**भामितः** - कुपितस्सन् वीर्ययुक्तान् ज्ञानवैराग्यादीन् मोक्षौपयिकान् **मा वधीः** - मा हिंसीः । त्वत्पूजोपकरणपुरोडाशादिलक्षणहविरादियुक्ताः सन्तः **त्वां** सदसि **हवामहे** - आराधयामः । इदित्यवधारणे । त्वामेवेत्यर्थः ।। २२ ।।

**।। इति चतुर्थाध्यायप्रकाशिका ।।**

**आ.भा.** - परपुरुषप्रपत्तिनिष्पत्तये स्वपरिजनान्नपेक्षमाणस्य जनस्य काम्यकर्मत्वेन समाराध्योऽपि सैवेति बोधयति - **मा नस्तोके** इत्यादि । **रुद्र?** हे संसाररुग्द्रावक? सर्वसंहारकेत्यर्थो वा 'कालः कलयतामहमिति' (भ.गी.१०-३०) स्मृत्युक्तेः । त्वदुपासका वयं हविष्मन्तस्त्वत्पूजोपकरभूतगन्धाक्षतपुरोडाशादिभिः संयुक्ताः सन्तः सदमित् **सर्वदैव त्वा** त्वां स्वरक्षायै **हवामहे** समाराधयामः संप्रार्थयामः इत्येतत् । अतस्त्वमस्मद्विरुद्धाचरणेन जीवलक्ष्यभूतत्वत्प्रपदनरूपपरमधर्मत्यागजनिताघेनेतियावत् **भामितो** मदाज्ञापरिपन्थीति कुपितस्सन् **मा नस्तोके पुत्रे तनये** पौत्रे मनः **आयुषि मानः गोषु मानः अश्वेषु** वा **रीरिषः** न्यूनतां मा सम्पादय ऐहिकसाधनतयापत्यपुत्रायुगोऽश्वप्रभृतीन् मा हिंसीरित्यर्थः रिषधातोर्हिंसार्थकत्वात् । तथैव नो **वीरान्** सवीर्यसम्पन्नान् जनान् मोक्षसाधनीभूतान् ज्ञानवैराग्यादीन् वा **मा वधीः** हिंसां मा विधेहीत्यर्थः । साधनवैकल्ये साधनानुपपत्ते तेषां मा हिंसीरिति प्रार्थना ।। २२ ।।

**।। इति चतुर्थाध्याय आनन्दभाष्यम् ।।**

## अथ पञ्चमोऽध्यायः

[विद्याविद्ययोः लक्षणम्]

**द्वे अक्षरे ब्रह्मपरे त्वनन्ते**
**विद्याविद्ये निहिते यत्र गूढे ।**
**क्षरं त्वविद्या ह्यमृतं तु विद्या**
**विद्याविद्ये ईशते यस्तु सोऽन्यः ।। १ ।।**

**प्र.** - पुनरपि ब्रह्ममाहात्म्यं (तादात्म्यं) चिदचिद्विवेकञ्च प्रपञ्चयति - **द्वे अक्षरे** इति । **ब्रह्मपरे** ब्रह्माराधनरूपे **अनन्ते** - असंख्यातव्यक्तिके नित्यानित्यफलसाधनतया (क्षरामृतशब्दिते) विद्याविद्याशब्दिते (ते?) ज्ञानरूपकर्मरूपे (द्वे?) यत्र **अक्षरे** - आत्मनि दुर्मोचतया लग्ने, सोऽप्यन्यः, आभ्यां समाराध्यमानः तत्फलप्रदश्चान्यः इत्यर्थः ।। १ ।।

**आ.भा.** - चिदच्छरीरकब्रह्मणो माहात्म्यनिर्वचपूर्वकतच्छेषतयावगम्यमानजीवस्य तद्वैलक्षण्याणुत्वादिकं निरूपयितुमवतारयतिपञ्चमोऽध्यायः - **द्वे अक्षरे** इत्यादि । **ब्रह्मपरे** - ब्रह्माराधनस्वरूपे**ऽनन्ते** नित्यानित्यपरिणामत्वेनासंख्यातीत व्यक्तिस्वरूपे**क्षरा**ऽमृतरूप-शब्दशब्दित इत्येतत् । **विद्याविद्ये** विद्यात्वेन प्रपञ्चितज्ञानकर्मपरे **द्वे** यत्राक्षरे प्रत्यगात्मनि **गूढे निहिते** सामान्यतो दुर्मोचतया समवलग्ने सुसंश्लिष्ट इत्येतत् । एतादृशोऽन्यः पुरुषोऽस्ति । अत्र क्षरं विनाशशीलो जडवर्गस्तु अविद्याशब्दशब्दितो भवति अमृतमविना-शिवर्गस्तुविद्यापदाभिहितं भवति सोऽप्यन्य एव यस्त्वाभ्यां सर्वदा समाराध्यमानः समाराधितस्तत्तदनुरूपफलप्रदायकश्च **विद्याविद्ये ईशते** पूर्वोक्तमनुशासति **सोऽन्यः** सर्वनियन्तेत्यर्थः । 'सर्वस्येशान' इति श्रुतेः ।। १ ।।

**यो योनिं योनिमधितिष्ठत्येको**
**विश्वानि रूपाणि योनीश्च सर्वाः ।**
**ऋषिं प्रसूतं कपिलं यस्तमग्रे**
**ज्ञानैर्बिभर्ति जायमानं च पश्येत् ।। २ ।।**

**प्र.** - **योनिमिति** । सर्वाणि समष्टिव्यष्टिरूपाणि तत्तद्योनीश्च सर्वाः **यो**ऽधितिष्ठति, **यस्तु अग्रे** - सृष्टि-पूर्वसमये **प्रसूतं कपिलं** ज्ञानादियुक्तं **बिभर्ति** - कृतवान् जायमानदशायाञ्च सानुग्रहमेक्षतः सोऽप्यन्य इति पूर्वेण संबन्धः ।। २ ।।

**आ.भा.** - मतविशेषे ब्रह्मरूपेणाशङ्क्यमानकपिलादितोऽप्यन्योऽयं परेशस्ततश्च कुतस्तरां तस्य सामान्यजीवैक्यमिति बुबोधयिषया द्वितीयं मन्त्रमवतारयति - **यो योनिं योनि**मित्यादि । **यः** एकः एव सन् **योनिं योनिं** समष्टिव्यष्टिरूपेण **प्रतियोनिं** प्रतिशरीरमिति यावत् **विश्वानि रूपाणि** जडचेतनतया विभक्तसमस्तभूतवर्गेषु **सर्वाः** योनीश्च समस्तकारणवर्गेषु च सर्वतो भावेना**धितिष्ठति** सर्वं संव्याप्यावतिष्ठति सर्वचराचररूपत्वेनाऽस्ति इत्येतत् । यो ह्यग्रेसर्गादिकाले **प्रसूतं** स्वसत्संकल्पेन समुत्पन्नं कपिलमृषिं हिरण्यगर्भं, ज्ञानैः सर्वप्रकारकतत्त्वादिभि**र्बिभर्ति** संपुष्टं करोतीत्यर्थः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.उ.६-१८) इति श्रुतेः । येन **च तं जायमानं** सर्वप्रथमसमुत्पद्यमानं ब्रह्माणं पश्येदैक्षत सानुग्रहमपश्यत् सोऽस्मादन्यः परपुरुष इति पूर्वेण सम्बन्धः ।। २ ।।

**एकैकं जालं बहुधा विकुर्वन्न -**
**स्मिन् क्षेत्रे संहरत्येष देवः ।**
**भूयस्सृष्ट्वा पतयस्तथेशः**
**सर्वाधिपत्यं कुरुते महात्मा ।। ३ ।।**

**प्र. - एकैकमिति ।** यस्मिन् **क्षेत्रे** प्रकृतिरूपे जालवद् बन्धके महदादिकार्यवर्गं विविधतया कुर्वन् पुनश्च संहरति; तस्मिन्नेव प्रकृतिरूपे **क्षेत्रे** कल्पान्तरेऽपि **भूयः** प्रजापत्युपलक्षितं प्रपञ्चं **सृष्ट्वा** सर्वदा सर्वेषां नियन्तृतया आस्ते यतोऽसौ (ततो?) महामहिमशाल्यात्मा इत्यर्थः ।। ३ ।।

**आ.भा.** - पूर्वप्रपञ्चितसर्वेशितुरनन्तब्रह्मकल्पकारकत्वाच्चतुर्मुखाद्यन्य-देवातिशायित्वमाहात्म्यं प्रतिपादयति - **एकैकं जाल**मित्यादि । **एषः** सर्वातिशायि-प्रत्यक्षतोऽनुभूयमानो **देवः** सर्वेश्वरोऽस्मिन् **क्षेत्रे** प्रकृतिरूपेऽस्मिन् प्रपञ्चे **सर्गसमये एकैकं जालं** पृथक्पृथक्तया बुद्ध्यादिभूतकार्यवर्गं **जालवदाबद्धकं बहुधा** नानाप्रकारेण **विकुर्वन्** याथातथ्येनावश्यकतानुसारं संविभक्तयन् पुनः प्रलयकाले तस्मिन्नेव स्वप्रकृतिभूते क्षेत्रे-**संहरति** प्रकृतिस्थत्वेनावासयति स्वस्मिन्नेवाऽविभक्तनामरूपगुणतां प्रापयतीत्यर्थः । असौ महामहिमशाली महात्माऽचिन्त्यशक्तिकेशो **भूयः** सर्गादिकाले कल्पान्तरेऽपि **तथैव** पूर्वसृष्टिमनुसृत्यैव **पतयः सृष्ट्वा** प्रजापत्याद्युपलक्षणलक्षितप्रपञ्चं सृष्ट्वा समस्तलोकपालादि-कान्समुत्पाद्येत्येतत् । तदाह स्मृतिः -

'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्' ।। (भ.गी.९-७)

सर्वभूतानि द्विपरार्धकालरूपब्रह्मण आयुः कल्पस्तस्यक्षये मामिकां मच्छरीररूपां प्रकृतिमविभक्तनामरूपां तमः शब्दाभिधेयां यान्ति तत्संकल्पाधीनत्वात् तेषां ते **मत्संकल्पकान्मत्प्रकृतिमाविशन्तीत्यर्थः** । कल्पस्यादौ पुनस्तानि सत्यसङ्कल्पोऽहं 'मनसैव जगत्सृष्टिं संहारञ्च करोति यः' । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' (तै.भृ.१-२) इत्युक्तदिशा विसृजामीति भावः ।

'सूक्ष्माचिच्चिद्द्वयेनावां विशिष्टौ प्रलये किल ।
सृष्टावावां विशिष्टौ तु स्थूलचिच्चिद्द्वयेन हि
जगत्सृष्ट्यादयो लीला ममेव राघवस्य च' इत्याद्यागमोक्तेः । सर्वाधिपत्यं कुरुते निगूढतया सर्वदा सर्वेषां सन्नियन्तृकत्वरूपेणाऽऽस्ते । एतादृशाद्भुतशक्तिकोऽन्यः परेशश्चतुर्मुखाद्यतिशयितमाहात्म्यमि ति भावः ।। ३ ।।

**सर्वा दिश ऊर्ध्वमधश्चतिर्यक्**
**प्रकाशयन् भ्राजते यद्वनड्वान् ।**
**एवं स देवो भगवान् वरेण्यो**
**योनिस्वभावानाधितिष्ठत्येकः ।। ४ ।।**

**प्र.** - ननु एतस्य कथं युगपत् सर्वयोन्यधिष्ठातृत्वम् उपपद्यत इत्यत्राह - **सर्वा दिश** इति । कालचक्र[१]परिवर्तनहेतुतया अनुडुच्छब्दवाच्यः सूर्यः तिर्यगूर्ध्वमधश्च युगपद्भासयन् **यत्** - यथा भासते; तथा मुमुक्षुभिर्वरणीयो भजनीयो भगवानेक एव सर्वयोन्यधितिष्ठति भवतीत्यर्थः ।। ४ ।।

**आ.भा.** - सर्वेश्वरस्यैकत्वेन सर्वेषु कथं युगपत्संस्थानत्वमुपपद्यते इति जिज्ञासाशान्त्यर्थमाह - **सर्वादिश** इत्यादि । **अनड्वान**नसिचक्रपरिवर्तनरूपेण प्रयुक्तवत् कालचक्रपरिवर्तनहेतुत्वान्ननड्वान् रूपेण रूपितसूर्यो यदु यथैकाक्येव **सर्वा दिशः ऊर्ध्वमधस्तिर्यक्** च सामस्त्येन **प्रकाशयन्** समुद्दीपयन् **भ्राजते** देदीप्यमानो भवति । एवमेव सः सर्वेश्वरो भगवान् -

'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः ।
भगत्वेनेरिताः सन्ति श्रीरामे भगवान् स तत्' ।। (भव.सं.२-५२)

---

१. कालचक्रेति - अनड्वान् हि अनसि युक्तः चक्रपरिवर्तन हेतुः । तथा सूर्यः दिनमासर्त्वयनादि-कालात्मकपरिवर्तकत्वात् अनड्वानिति ।। (भाष्यपरिष्कारः)

'श्रीरामे भगवच्छब्दो मुख्यवृत्त्या प्रवर्तते ।
गौण एव स चान्यत्र षड्विधैश्वर्यलेशतः' ।।

इत्यादिरूपेणाचार्यचरणविवृतो **भगवान् वरेण्यो देवः** सर्वजीवैर्मुक्तये सर्वदैववरणीयो-भजनीयश्चैक एव **योनिस्वभावान्नधितिष्ठति** स्वसत्यसंकल्पोपार्जितसर्वयोनिष्वधिष्ठातृत्वे-नाधिपत्यं करोतीत्यर्थः ।। ४ ।।

**[सर्वदेवोपास्यत्वम्]**

**यच्च स्वभावं पचति विश्वयोनिः**
**पाच्यांश्च सर्वान् परिणामयेत् यः ।**
**सर्वमेतद्विश्वमधितिष्ठत्येको**
**गुणाँश्च सर्वान् विनियोजयेद्यः ।। ५ ।।**

**तद्वेदगुह्योपनिषत्सु गूढं**
**तद्ब्रह्मा वेदते ब्रह्म योनिम् ।**
**ये पूर्वं देवा ऋषयश्च तद्विदु-**
**स्ते तन्मया अमृता वै बभूवुः ।। ६ ।।**

**प्र. - यच्चेति ।** यच्चेति लिङ्गव्यत्ययश्छान्दसः । **यः** सर्वेषामग्निजलादिवस्तूनाम् उष्णानुगुणस्वभावं **पचति** - सङ्कल्पलक्षणपाकेन निर्वर्तयति; यश्च **पाच्यान्** परिणामयोग्यान् परिणामयति । सत्वा (सत्या) दींश्च गुणान् प्रवर्तयति, स परंमात्मा सर्वप्रकृत्यधिष्ठाता इत्यर्थः । **तद्वेदेति । तेषु** - प्रसिद्धेषु वेदेषु गुह्योपनिषत्सु (च) तात्पर्यविषयतया प्रतिपाद्यं ब्रह्मणो वेदस्य योनिभूतं तत् परं ब्रह्म सकलवेदप्रवर्तकः **ब्रह्मा** चतुर्मुखः **वेदते** - जानाति । अतादृशो न जानाति । **ये च पूर्वे देवा ऋषयश्च** तत् ज्ञातवन्तः, ते सर्वे (तत्स?) समानाकारा मुक्ता **बभूवुः** इत्यर्थः ।। ५, ६ ।।

**आ.भा.** - 'कालः स्वभावोनियतिः' इत्यादीनामेतदधीनत्वमाह - **यच्च स्वभावमित्यादि** । यद्विश्वयोनिर्योजलादिभूतवर्गाणां सर्वेषां परमकारणमास्तेऽत्रछान्दसत्वाल्लिङ्गव्यत्ययः **स्वभावञ्चो**ष्णानुष्णादितत्तद्गुणादींश्च **पचति** स्वस्वभाविकसंकल्परूपपाकेन समवर्त्तयति यश्च सर्वानखिलान् परिणामयोग्यान् **पाच्यान्** पदार्थान् परिणामयेत् तत्तदाकारेण यथायथं परिवर्तयतीत्यर्थः । **यः** एकः **सर्वान् गुणान् विनियोजयेत्** सत्वादिगुणानन्यवर्गेषु यथायथं संयोगयतीत्येतत् । एतच्च सर्वं सर्वैः प्रात्यक्षेणानुभूयमानं **विश्वमधितिष्ठति**-सर्वमपि जडचेतनवर्गजातमधिष्ठायमनुशासति स एव सर्वाराध्यपरपुरुषः सैवोपासनीयो मुक्तिकामैर्नान्यः 'शरण्यौ वेदनीयौ च भजनीयौ हि मुक्तये' इत्यागमोक्तेः ।। ५ ।।

चतुर्मुखादिदेवानामृषिप्रभृतीनामपि चेदृशब्रह्मवेदनान्मुक्तिरित्यस्यैवोपास्यत्वमाह **तद्वेदगुह्येत्यादि । तद्वेदगुह्योपनिषत्सु** सर्वप्रसिद्धवेदेषु वेदान्ततया प्रसिद्धभगवद्रहस्य-प्रकाशनपरकोपनिषत्सु च गूढम् अतिगहनतया तात्पर्यविषयत्वेन स्थितं **ब्रह्मयोनिं** ब्रह्मणो वेदस्य योनित्वेनावगतं **तत्** परंब्रह्म ब्रह्मा-सर्ववेदप्रसारकश्चतुर्मुखो **वेदते** जानाति ये च **पूर्वदेवाः** सर्वेशसमुपासकाः पुरातना देवाः ऋषयश्च साधकऋषिगणाश्चेत्यर्थः । तद्विदुः याथातथ्येन तत्स्वरूपं ज्ञातवन्तोऽतस्ते सर्वेऽपि **तन्मयाः** सर्वेशपरब्रह्माकारतया आविर्भूतगुणाष्टकत्वेन ब्रह्मसमानाकारतामवाप्ता इत्येतन्नतु तदभिन्नतां गताः - 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (भ.गी.१५-१७) 'जगद्व्यापारवर्जं समानो ज्योतिषा' इत्यादिशास्त्रविरोधात् सन्तो **अमृताः बभूबुः** मुक्ता जाता मरणधर्मविवर्जितत्वेन सायुज्यं गता इत्यर्थः । अतः साधकैः सैव सर्वेशो साध्यो नान्यः 'नान्यः पन्था विद्यतेऽयनाय' इति (श्वे.उ.३-८) श्रुत्युक्तेः **वै** शब्दश्च -

"सत्यसन्धः प्रतिश्रुत्य प्रपन्नायाभयं स्वयम् ।

निवर्तयेद्भयेनैनं श्रीरामः श्रितवत्सलः" ।। इतिस्मृतिप्रपञ्चितश्रीरामशरणापन्नजीवानां सर्वदा सर्वाभयत्वं व्यनक्ति ।। ६ ।।

**गुणान्वयो यः फलकर्मकर्ता**
**कृतस्य तस्यैव स चोपभोक्ता ।**
**स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा**
**प्राणाधिपः संचरति स्वकर्मभिः ।। ७ ।।**

**प्र.** - एवं परमात्मस्वरूपं तज्ज्ञानस्यामृतसाधनत्वञ्च उक्त्वा जीवस्वरूपं शोधयति - **गुणान्वय** इति । सत्वरजस्तमोगुणानामन्वयो यस्य स तथोक्तः । सत्वादिगुणान्वितः सन् फलसाधनभूतं कर्म यः करोति, स एव तस्यैव फलं भुङ्क्ते । एवं नियतकर्तृत्व-भोक्तृत्वशाली स्थावरनरपक्ष्यादिरूपयुक्तः कामक्रोधलोभरूपगुणत्रययुक्तो देवयानपितृयाण-कष्टगतिरूपमार्गत्रययुक्तः प्राणसहचरितस्सन् कर्मपाशबद्धः सञ्चरति इत्यर्थः ।। ७ ।।

**आ.भा.** - पूर्वप्रकरणे सर्वाराध्यपरेशरूपं तज्ज्ञानस्य मोक्षसाधनत्वञ्चोपवर्णितम् । तत्राहमस्मीत्यादिरूपेण देवैः ऋषिभिश्चविधीयमानमुपासनं जीवब्रह्माद्वैतपरं भवेदित्या-शंकास्पदमाकलय्यात्यन्ताणोर्जीवस्य महता ब्रह्मणा ऐक्यायोगंतत्रोपासनायां शेषशेषित्वेन-शरीरात्मभावापन्नविशिष्टैक्यपरकत्वमेवेति बोधयितुञ्च जीवाणुत्वस्वरूपं वर्णयति - **गुणान्वय**

इत्यादि । यो जीवो गुणान्वयः सत्वरजस्तमोभेदविभिन्नानां गुणानामन्वयः तत्राबद्ध इत्येतत् । सत्त्वादिगुणसंबद्धं सद् यद् यद् भोगफलसाधनरूपं कर्म तत् करोति भुङ्क्ते चेत्यर्थः । तदाहुर्जगद्गुरवः श्रीपूर्णानन्दाचार्यचरणाः श्रीबोधायनमतादर्शे -

'ज्ञातेति कथनाज्जीवे कर्तृत्त्वमपि सिद्ध्यति ।
सामानाधिकरण्येन ज्ञानकर्तृत्त्वयोस्ततः ।
चेतनोऽहं करोमीति प्रतीतिरुपपद्यते ।
कर्तृत्वमात्मनो धर्मो भोक्ता भोग्यमितिश्रुतेः ।
चेतनस्यात्रकर्तृत्वं भोकृत्वे हि प्रयोजकम् ।
अन्यः करोति भुंक्तेऽन्यः कथञ्चिन्नोपपद्यते ।
प्राज्ञैश्च कर्मकर्त्तुर्हि सम्मतं कर्मणः फलम् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।
इति श्रुतिप्रमाणत्वात् कर्तृत्वं नात्मनो ननु ।
किन्त्वन्तःकरणस्थं तदध्यस्तमात्मनीति नु ।
मैवं प्रतीयते चात्र कर्तृता मनसो न यत् ।
किन्तूपकरत्वं वै भोकृत्वे चात्मनो मतम् ।
अन्यथा चेन्द्रियादेश्च कर्तृत्वं संभवेत्खलु ।
कर्तृत्वमात्मनस्तस्मान्नैषा श्रुतिर्निषेधति ।
'कर्त्ता शास्त्रार्थवत्त्वाद्' वै व्यासेन सूत्रितं ततः ।
ततश्चाहं करोमीति प्रतीतिरुपपद्यते ।
यद्यात्मनो न कर्तृत्वं शास्त्राणां व्यर्थता भवेत् ।
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ।
नन्वेवं प्रतिसिद्धा च ह्यात्मनो हन्तृताश्रुतौ ।
इति चेन्नात्मनित्यत्वाद् हन्तृता वर्जिता यतः ।
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ।
इत्येवं ननु गीतायां निषिद्धा कर्त्तृतात्मनः ।

उदीरितश्च गीतायामुत्तरत्रायमाशयः ।
न स्वरूपप्रयुक्तं हि गुणसंसर्गतो यतः ।
मैवं जीवस्य कर्तृत्वं संसारिकप्रवृत्तिषु ।
पञ्चैतानि महाबाहो कारणानि निबोध मे ।
अधिष्ठानं तथा कर्त्ता करणं च पृथक् विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्रपञ्चमम् ।
शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ।
तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मति ।
प्रश्नोपनिषदि 'कर्त्ता' स्पष्टं जीवः समीरितः ।
ग्रहणस्य विहारस्य चात्मनः कथनाच्छ्रुतौ ।
आत्मनश्चैव कर्तृत्वं बादरायणसम्मतम् ।
विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ।
तैत्तरीयेऽपि चेत्येवं कर्तृत्वमात्मनः श्रुतम् ।
बुद्धेरेव हि कर्तृत्वं सांख्यास्तु प्रवदन्ति हि ।
सम्भवेच्च तथात्वे तु बुद्धेरेव हि भोक्तृता ।
कर्तृत्वे च मते बुद्धेः समाधिश्च भवेन्न हि ।
आत्मनः कर्त्तृता तस्मात्सिद्धान्ते स्वीकृता खलु ।
तक्षावत् स्वेच्छया चात्मा करोति न करोति च ।
जडबुद्धेस्तु कर्तृत्वे व्यवस्थैषा न सम्भवेत् ।
स्वायत्तं राघवायत्तं कर्तृत्वं वा किमात्मनः ।
जीवस्य भोक्तृता तस्मात् पक्षश्चाद्योमनोहरः ।
विधिनिषेधशास्त्राणां वैयर्थ्यं चान्यथाभवेत् ।
पिप्पलं स्वादु चात्तीति जीवस्य भोक्तृता श्रुतौ ।
इति चेन्न यतो जीवे राघवाधीनकर्त्तृता ।
अन्तःप्रविष्टः शास्तेति श्रुतौ रामो हि शासकः ।

विधिनिषेधशास्त्राणां वैयर्थ्यं हि तथा ननु ।
मैवं जीवस्य यत्नं यद्वीक्ष्यं स्वानुमतिं खलु ।
रामो दत्ते ततो जीवो योग्यो विधिनिषेधयोः ।
तथा प्रवर्त्तते चाथ फलदाने तु चात्मनः ।
वैषम्यं चाथ नैर्घृण्यं मन्येते राघवे न तु ।
अवोचद्भगवांश्चैवं गीतायां स्वयमेव हि ।
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
एष एव साधुकर्मेत्यादिश्रुतिप्रमाणतः ।
अखिलं चात्मकर्तृत्वं रामाधीनं हि मन्यते ।
कर्तृत्वं राघवाधीनं निर्दोषं श्रुति सम्मतम् ।
विशिष्टाद्वैतसिद्धान्ते जीवस्य मन्यते ततः' ।। (९६७-९९९) इति ।

तथैव श्रौतप्रमेयचन्द्रिकाकाराः -

'ईशाधीनो हि जीवात्मा लोके कर्म करोति तत् ।
ईशदत्तं फलं भुङ्क्ते जीवः स्वकृतकर्मणः' । (५-२७) **'कर्त्ता शास्त्रार्थवत्त्वात्'** (ब्र.सू.२-३-३३) इति सूत्रवृत्तौ जगद्गुरुश्रीदेवानन्दाचार्यचरणा **अपि** 'आत्मा कर्त्ता ननु प्रकृतिः' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' (आप.श्रौ.५-६) इत्यादिशास्त्राणामप्रवृत्तस्य पुरुषस्य प्रवर्त्तकबोधोत्पादनद्वारा प्रवृत्त्युत्पादनेनार्थवत्त्वात् । 'अन्तःकरणस्य प्रवर्त्यत्वस्वीकारे तु तस्याचेतनत्वेन प्रवर्त्तकबोधोत्पादनासम्भावच्छास्त्र-वैफल्यमनिवार्यमेवेति' (श्रीबोधायनवृत्तिसारः २-३-४) इत्याहुरतः सः **फलकर्मकर्ता** फलोद्देश्यपूर्वककर्मसम्पादकः स एव च तस्यैव शुभाशुभात्मकस्वकृतस्यैव कर्मफलस्योपभोक्ता भोगकर्तापीति शेषः । उक्तरूपेण रूपितो **विश्वरूपः** स्थावरजङ्गमादि-भेदभिन्नस्त्रिगुणः कामक्रोधलोभाख्यगुणत्रययुक्तः **प्राणाधिपः** प्राणानामधिपः आश्रयस्थानं तत्सहचरितः सन्नित्येतत् सः स्वकर्मभिः स्वप्रवर्तितकर्मपाशसंबद्धः सन् **सञ्चरति** तत् तत्फलभोगकाले तत्तद्योनिषु विचरतीत्यर्थः ।। ७ ।।

**अङ्गुष्ठमात्रो रवितुल्यरूपः**
**सङ्कल्पाहङ्कारसमन्वितो यः ।**
**बुद्धेर्गुणेनात्मगुणेन चैव**
**आराग्रमात्रो ह्यवरोऽपि दृष्टः ।। ८ ।।**

**प्र. - अङ्गुष्ठमात्र** इति । **बुद्धेः** अन्तःकरणस्य सत्वरजस्तमोलक्षणगुणकारितेन आत्मधर्मभूतनानाविधार्थविषयकाध्यवसायेन युक्तः तत्कार्येण तत्तत्फलसंकल्पेन आढ्योऽभिजनवानस्ति इत्यहङ्कारेण (च?) युक्तस्सन् आत्मवत् स्वप्रकाशः, 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इत्युक्तरीत्या अङ्गुष्ठपरिमाणः शास्त्रेषु दृष्टः । ततोऽपि **अवरः** - हीनपरिमाणः आराग्रमात्र इत्यपि **दृष्टः** - शास्त्रेषु दृष्ट इत्यर्थः ।। ८ ।।

**आ.भा. -** पूर्वमन्त्रोदितजीवस्वरूपमेव प्रपञ्चयति - **अङ्गुष्ठमात्र** इत्यादि । योऽगुष्ठमात्रः 'अङ्गुष्ठमात्रपुरुषं निश्चकर्ष यमो बलान्' इत्युक्त्या तत्परिमाणवान् **रवितुल्यरूपः** स्वप्रकाशरूपो **बुद्धेर्गुणेन** अन्तःकरणस्य सत्वादिगुणेनाध्यवसायात्मके नात्मधर्मभूतेन संकल्पाहङ्कारसमन्वितः 'आढ्योऽभिजनवानस्मि' इत्यादिरूपेण तत्तत्कार्ये तत्तत्कार्यानुकूल्येन युक्तः सन्नात्मगुणेनात्मवत् स्वप्रकाशस्वरूपश्चैवाराग्रमात्रश्चर्म सूच्यग्रभागपरिमाणवान् ततोऽ**प्यवरः** सूक्ष्मपरिमाणवान् जीवः शास्त्रेषु तज्ज्ञै**र्दृष्टः** प्रत्यक्षसमानाकारतयानुभूत इति ।। ८ ।।

**[जीवात्मनः लक्षणम्]**

**वालाग्रशतभागस्य शतधा कल्पितस्य च ।**
**भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ।। ९ ।।**

**प्र.** - स्वमतमुपन्यस्यति - **वालाग्रेति । वालाग्रशतांश** - शतांशतुल्यपरिमाण एव **जीवो** मोक्षे धर्मभूतज्ञानविकासेन विभुत्वलक्षणा**नन्त्याय** प्रभवतीत्यर्थः ।। ९ ।।

**आ.भा.** - प्रस्तुतोऽयं जीवात्माऽत्यन्ताणुरिति स्वमतमाह - **वालाग्रेत्यादि । वालाग्रशतभागस्य** तस्यापि **शतधा कल्पितस्य** अग्रभागशतांशशतांशरूपपरिमाणस्येति यावत् यद् भागो भवति स एव जीवो विज्ञेयः तादृशपरिमाणयुक्तो जीवो ज्ञातव्य इत्यर्थः । उपदर्शितपरिमाणयुक्तश्चजीवोऽत्यन्ताणुत्वेऽपि मोक्षसमये विभुत्वरूपा **आनन्त्याय कल्पते** स्वधर्मभूतज्ञानविकासेनानन्तस्वासीमत्वापरिच्छिन्नत्वञ्चाधिगच्छतीत्यर्थः । एतेन जीवस्य

नियतपरिमाणत्वं मध्यमपरिमाणत्वं वा तिरस्कृत्याणुपरिमाणक्त्वमेव संस्थापितं श्रुत्याऽत्रैवसर्वशास्त्रसङ्गतेरिति दिक् ।। ९ ।।

**नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।**
**यद्यच्छरीरमादत्ते तेन तेन स युज्यते ।। १० ।।**

**प्र.** - स्त्रीपुंनपुंसकत्वादिकमपि तस्य तादृशशरीरसम्बन्धकृतम् न (तु) स्वाभाविकम् इत्याह - **नैव स्त्रीति** । स्पष्टोऽर्थः ।। १० ।।

**आ.भा.** - पूर्वप्रतिपादितस्य जीवात्मनो लोके सामान्यतः स्त्रीत्वादिलिङ्गत्रये प्रसिद्धत्वात्तस्य च सावयवत्वेनानुभूयमानत्वात्कथं तस्यात्यन्ताणुत्वमिति शङ्कामपनोदनाय प्राह - **नैव स्त्रीत्यादि । एषो** जीवात्मा वस्तुतो **न स्त्री न पुमान् न चैवायं नपुंसकादिकं** यद् यद् भोगायत भूतं शरीरमादत्ते स्वीकरोति स तदा **तेन तेन** तत्तद्रूपेणेति यावत् **युज्यते** स्वकर्मफलोपभोगसमये तदाकारत्वेन तत्र तत्र युक्तो भवति न तु तस्य स्वाभाविकत्वं तत्त्वमित्यर्थः । 'विकारश्च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातञ्च नैति । प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्यकर्म' इत्यचार्योक्तदिशा जीवकर्मस्वारस्यात् शरीरगतमेव स्त्रीत्वादिकं न तु स्वात्मगतमिति दिक् ।। १० ।।

**सङ्कल्पनस्पर्शनदृष्टिहोमै -**
**र्ग्रासाम्बुवृष्ट्या[१]ऽऽत्मविवृद्ध जन्म ।**
**कर्मानुगान्यनुक्रमेण देही**
**स्थानेषु रूपाण्यभिसम्प्रपद्यते ।। ११ ।।**

**प्र.** - देहप्राप्तौ हेतुमाह - **सङ्कल्पेनेति** । पुण्यविषयक सङ्कल्पगङ्गादिलक्षण-पुण्यवस्तुस्पर्श तादृशवस्तुदर्शन यागहोमादिभिरात्मनो विवृद्धियुक्तं जन्म उत्कृष्टं जन्म इति यावत् - अनेनक्रमेण (?) कर्मानुसारीणि रूपाणि तेषु तेषु ब्राह्मणादिषु योनिषु (अनुक्रमेण) पर्यायेण **प्रपद्यत** इत्यर्थः ।। ११ ।।

**आ.भा.** - जीवात्मनः प्रकृतशरीरप्राप्तौ कारणं किमिति जिज्ञासायामाह - **संकल्पनेत्यादि । संकल्पनस्पर्शनदृष्टिहोमैः** शास्त्रविहितपुण्यविधायकसत्यसंकल्पैः सरयूगङ्गाप्रभृतिपुण्यलक्षणजलवस्तुस्पर्शैः शास्त्रानुमोदितपुण्याधायकवस्तुसुदृष्टिपातैः

---

१. वृष्टिः - ओ व्रश्चू - छेदने । अनर्थवतामनर्थोच्छेदनं पुण्यहेतुर्भवति, अर्थवतामर्थोच्छेदनं पापहेतुः इति विज्ञानभगवत्पादभाष्यम् ।

पुण्योत्पादकशास्त्रानुमोदितहोमैर्यागादिविशेषैस्तथाग्रासाम्बुवृष्ट्या भोजनजलपानवृष्ट्यादिभिः 'आहारशुद्धौ सत्वशुद्धिः' (छां.उ.७-२६-२) इत्यादिश्रुत्युक्तदिशा सर्वेशसन्निवेदितविशुद्धाहारैः

'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम्' ।। (भ.गी.१७-२०)

इति स्मृत्युक्तदिशा योग्यायोग्येषु ग्रासाम्बुदानादिप्रदानं पुण्यपापहेतुर्भवतीति शास्त्रमर्यादा वृष्ट्यादेरपि तथैव ओव्रश्चू छेदन (धा.पा.१२९३) इति निष्पन्नत्वात्तस्य । अनर्थोच्छेदनमनर्थवतां पुण्यहेतुरर्थोच्छेदनमर्थताञ्च पापहेतुरिति तात्पर्यम् । ततश्च तत्तद्धेतुकं तत्तच्छरीरधारणमिति विवेकः । आत्मविवृद्धिजन्मजीवात्मनो विवृद्धिजन्मदेवमनुष्यादि-प्रकृष्टयोनिषु जन्म भवत्यतो **देही** जीवात्मस्थानेषु स्वकर्मसंकल्पानुगुण्येन तेषु तेषु ब्राह्मणस्त्रीनपुंसकादियोनिषु कर्मानुगानि स्वकर्मानुसरणशीलानि स्वसंकल्पानुगानीति यावत् **रूपाणि** तत्तच्छुभाशुभसंकल्प- लक्षितानि हेयोत्कृष्टादीनि शरीराणि -

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय? सदा तद्भावभावितः' ।। ( भ.गी.८-६) इति स्मृतेः ।

अनुक्रमेण भोगानुकूल्यसंकल्पपर्यायेण **अभिसम्प्रपद्यते** यावत्कर्मफलभोगं भूयो भूयः संप्राप्नोतीति शेषः ।। ११ ।।

**स्थूलानि सूक्ष्माणि बहूनि चैव**
**रूपाणि देही स्वगुणैर्वृणोति ।**
**क्रियागुणैरात्मगुणैश्च तेषां**
**संयोगहेतुरपरोऽपि दृष्टः ।। १२ ।।**

**प्र. - स्थूलानीति ।** मशकमातङ्गादिस्थूलसूक्ष्मशरीराणि बहुविधान्यपि तत्तत्फलाभिसन्ध्यादिलक्षणरागादिरूपात्मगुणप्रयुक्तयागादिरूपक्रियालक्षणैः गुणैर्हेतुभिः भजते । तादृशात्मगुणयोगे च पूर्वपूर्वं कर्मैव हेतुर्दृष्टः इत्यर्थः ।। १२ ।।

**आ.भा.** - जीवात्मनो भूयोभूयो नानायोनिग्रहणे कारणान्तरमपि दर्शयति - **स्थूलानि सूक्ष्माणीत्यादि । देही क्रियागुणैः** - स्वसंस्कारोद्भूतकर्म**भिरात्मगुणैः स्वगुणैश्च** तत्तत्फलयुक्तयागादिलक्षणगुणैराबद्धः **सन् स्थूलानि सूक्ष्माणि चैव बहूनि** देवमनुष्यमातङ्गमशकप्रभृतीनि **रूपाणि** स्वरूपाकृतिविशेषाणि **वृणोति** तत्तत्फलभोगाय

स्वीकरोतीति **तेषां** तत्र तत्र **संयोगहेतुरयमपरोऽपि दृष्टः** शास्त्रेष्विति शेषः । जीवानां स्वकृतकर्मैव तादृशात्मयोगे हेतुरिति विवेकः ।। १२ ।।

**अनाद्यनन्तं कलिलस्य मध्ये**
**विश्वस्य स्रष्टारमनेकरूपम् ।**
**विश्वस्यैकं परिवेष्टितारं**
**ज्ञात्वा देवं मुच्यते सर्वपाशैः ।। १३ ।।**

**प्र. - अनाद्यनन्तमिति । कलिलस्य -** कार्यस्य मध्ये स्थित्वा हिरण्यगर्भ-प्रजापत्याद्यनेकरूपतया **विश्वस्य स्रष्टारम्** इत्यर्थः । शिष्टं पूर्ववत् ।। १३ ।।

**आ.भा. -** पूर्वोक्तप्रकारेण प्रत्यगात्मनः स्वरूपमभिधाय तत्प्राप्यस्वरूपमभिधत्ते - **अनाद्यनन्तमित्यादि । कलिलस्य** स्वकार्यरूपातिविचित्रसंसारस्य **मध्ये** संस्थित्वाऽनाद्यनन्तम् आदिमध्यावसानविवर्जितमचिन्त्यमिति यावत् । **विश्वस्य स्रष्टारं** हिरण्यगर्भाद्यनेकरूपेण जगत्सृष्टिविधातारं 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै.उ.आन.६-२) इति श्रुतेः । अनेकरूपमनन्तानन्तस्वरूपत्वेन **विश्वस्य परिवेष्टितारं** सर्वतोभावेन समव्याप्यस्थितमेकमद्वितीयं समाभ्यधिकविवर्जितं **देवं** सर्वेश्वरं देवशब्दवाच्यं श्रीरामं ज्ञात्वा **सर्वपाशैः** सांसारिकसमस्तबन्धनैः **मुच्यते** श्रीरामसायुज्यं लभते इत्यर्थः ।। १३ ।।

**भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।**
**कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ।। १४ ।।**

**।। इति पञ्चमोऽध्यायः ।।**

**प्र. - भावेति । भावग्राह्यं -** भक्तिग्राह्यं **अनीडत्वेन -** अनिलयत्वेन अनाधारत्वेन आख्यायमानं विश्वस्य **भावाभावकरं -** सर्गसंहारकारकं सर्वदा अशुभासृष्टं विद्यासर्गकारणं (कारिणं?) **ये** पूर्वं ज्ञातवन्तः, **ते** प्रकृतिविनिर्मुक्ता बभूवुः इत्यर्थः ।। १४ ।। (द्विरुक्तिरध्यायसमाप्त्यर्था)

**।। इति पञ्चमाध्यायप्रकाशिका ।।**

**आ.भा. -** पूर्वं ये देवा ऋषयश्च 'तद्विदुस्तेऽमृता बभूबु'रिति बहूनामुपासनद्वारा सायुज्याप्तिरिति प्रपञ्चितं तच्चैवं भूतजीवविलक्षणस्याराधनेनेत्युपसंहरन्नाह - **भावग्राह्यमित्यादि । भावग्राह्यं** भावोऽत्रपरेशस्वरूपविषयिण्यतिशयिता श्रद्धा भक्त्यपरपर्याया तेन **ग्राह्यं** प्राप्तुं शक्यमिति यावत् -

"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" ।। (क.उ.१-२३)

इति श्रुतेः ।

"रामो ब्रह्मपरात्परं श्रुतिमतं भक्त्यैव निःश्रेयसम्" (श्रीबोधायनपञ्चके ज.गु. श्रीसदानन्दाचार्याः)

"रामस्य ब्रह्मणोऽनन्यभक्त्यैव मुक्तिराप्यते" (साधनदीपिकायां ज.गु. श्रीगङ्गाधराचार्याः)

"घृतं जलात्तथा तैलं सिकतातश्चानिःसरेद् ।

तथापि भगवद्भक्तिं विना भुक्तेर्न सम्भवः" (योगपञ्चके ज.गु. श्रीदेवानन्दाचार्याः)

भक्त्यैव मुक्तिदाता स स्वप्रपत्त्या तथैव च । (श्रौतप्रमेयचन्द्रिकायां ज.गु. श्रीश्रियानन्दाचार्याः) इत्याद्याचार्यप्रवरणामुक्तेश्च ।

**अनीडाख्यम्** अनावाररूपेणाऽऽख्यायमानमनिलयत्वमितिशास्त्रप्रसिद्धमिति भावः । भावाभावकरमुत्पत्तिस्थितिसंहारप्रविवापकं जगत्सृष्ट्यादिसर्वलीलासम्पादकमितियावत् शिवम् अशुभास्पृष्टं सदैकरूपत्वेन कल्याणनिलयमितियावत् । **कलासर्गकरं** सद्विद्याद्यन्तकलोद्भूत-स्थानं देवं 'यतो वा इमानि भूतानि जायन्ते' (तै.उ.भृ.१-१) 'जन्माद्यस्य यतः' (ब्र.सू.१-१-२) 'जगत्सृष्ट्यादयो लीला ममेव राघवस्य च' इत्यादिरूपेण श्रुतिस्मृत्यादिभिः प्रबोधितं सर्वेश्वरश्रीरामं **ये** शास्त्रोक्तदिशा समुपासका **विदुस्ते तनुं** स्वकर्मभोगसाधनभूतं शरीरं **जहुः ।** प्रकृतेर्मुक्ता भूत्वा श्रीरामसायुज्यमवापुरित्येतत् । अध्यायसमाप्तिसूचिका द्विरुक्तिः ।। १४ ।।

**।। इति पञ्चमोऽध्याय आनन्दभाष्यम् ।।**

# अथ षष्ठोऽध्यायः

[भगवतः कालस्वभावादेः कारणत्वम्]

**स्वभावमेके कवयो वदन्ति**
**कालं तथान्ये परिमुह्यमानाः ।**
**देवस्यैष महिमा लोके**
**येनेदं भ्राम्यते ब्रह्मचक्रम् ।। १ ।।**

**प्र.** - पुनरपि परमात्मनो गुणान् वक्तुमध्यायान्तरारम्भः - **स्वभावमिति ।** केचन लोकायतिकाः[१] जगच्चक्रपरिवृत्तिहेतुं स्वभावं **वदन्ति । अन्ये** भगवन्मायामोहिताः कालकर्मादिकं वदन्ति । तदिदमौपनिषदपरमपुरुषवरणीयता हेतुभूतगुणविशेषविरहिणां जल्पितम् । परमात्ममहिम्नैव ब्रह्माश्रितं जगच्चक्रं बम्भ्रमीति इत्यर्थः । अथवा - **ब्रह्म** - प्रकृतिः । प्रकृतिप्राकृतचक्रं बम्भ्रमीति इत्यर्थः ।। १ ।।

**आ.भा.** - अथाध्यायपञ्चकाभिहितानर्थाननूद्य 'धर्मावहं पापनुदं भगेशं' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.उ.६-८) इत्यादिना विशिष्य परब्रह्मणः श्रीरामस्य कल्याणगुणानभिधातुं प्रवर्त्ततेऽयमन्तिमः षष्ठोध्यायः - **स्वभावमिति ।** तत्र कालस्वभावो नियतिर्यदिच्छा भूतानि योनिः पुरुष इति चिन्त्यम् (श्वे.उ.१-२) इति प्रथमाध्यायोक्तमर्थमनुवदन्नाह - **एक** इति । एके केचन **कवयो** विद्वांसः । लोकायतिका इत्यर्थः । जगच्चक्रपरिवर्त्तने कारणभूतं स्वभावं वदन्ति उदीरयन्ति । एतेन वेदबाह्यकारणवादिना उपलक्षिताः **परिमुह्यमानाः** भगवन्मायया मोहं प्रापिता **अन्ये** इतरे वैदिकाभासा इत्यर्थः । **कालं** जगच्चक्रपरिवर्त्तनकारणं वदन्ति । अत्र **'तु'** शब्दः पूर्वपक्ष व्यावर्त्तयति । तथा च स्वभावकालयोर्जगत्कारणत्वं निरस्यन् सिद्धान्तयति - **देवस्यैष महिमेति । लोके देवस्य** "ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसंज्ञकः । जप्तव्यो मन्त्रिणा नैनं विना देवः प्रसीदति" । (रामपूर्वता.११), 'भवान् नारायणो देवः' (रा.यु.कां.११७-१४), 'श्रीरामचन्द्रं

---

१. लोकायतिकाः - चार्वाकाः ।

चार्वाकाः तत्तत्पादार्थानां प्रवृत्तिनिवृत्तये तेषां पदार्थानां सहजस्वभाव एव कारणम् अन्यत् कारणं न इति वदन्ति । तदुक्तम् सर्वदर्शनसङ्ग्रहे -

'अग्निरुष्णो जलं शीतः समस्पर्शस्तथानिलः ।
केनेदं चित्रितं तस्मात् स्वभावादेव तद्व्यवस्थितिः' ।।

हरिमादिदेवं परात्परं राममहं भजानि' ।। (सनत्कुमारसं) इत्यादिश्रुतिस्मृतिप्रामाण्याद् देवशब्दवाच्यस्य भगवतः श्रीरामस्यैव महिमा सङ्कल्पो **येन महिम्नेदं ब्रह्मचक्रं** ब्रह्माश्रितं जगच्चक्रं प्रकृतिप्राकृतचक्रं वा **भ्राम्यते** ।। १ ।।

**[परब्रह्मणः महिमा]**

**येनावृतँ नित्यमिदँ हि सर्वं**
**ज्ञः कालकालो गुणी सर्वविद्यः[१] ।**
**तेनेशितं कर्म विवर्तते ह**
**पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यतम् ।। २ ।।**

**प्र. - येनावृत**मिति । यो **नित्यं** सर्ववस्तुव्यापकः सर्वज्ञः 'कालं स पचते तत्र न कालस्तत्र वै प्रभुः' (महा.भा.मो.प.२५-९) इत्युक्तरीत्या कालस्यापि पाचकः, 'तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः,' (वि.पु.६-५-८५), सर्वज्ञानप्रकार-(प्रकारज्ञान?) वान्, **तेनेशितं कर्म विवर्तते ।** क्रियत इति कर्मेति कार्यतया **कर्म**शब्दितं पञ्चभूतात्मकं जगत् **तेन** - परमात्मना, स्यादिति सङ्कल्पमात्रविषयीकृतं सत् **विवर्तते** - निष्पद्यते इत्येतदेव हृदि चिन्तनीयमित्यर्थः ।। २ ।।

**आ.भा. -** नियतिरपि न स्वातन्त्र्येण कार्यं करोत्यपि तु देवप्रेरणयैवेत्याह - **येनेति । येन** भगवता श्रीरामेण **नित्यमिदं सर्वं** चेतनचेतनात्मकमखिलं विश्वम् आवृतं व्याप्तं हि य श्रीरामोनित्यं सर्वव्यापक इत्यर्थः । यश्च **ज्ञः** सर्वज्ञः कालस्यापि कालः **कालकालः** कालस्यापि नियन्ता प्रशस्ता गुणा सन्त्यस्येति **गुणी** कारुण्याद्या-श्रयणीयौपार्थककल्याणगुणगणार्णवो यः सर्वं वेत्तीति **सर्ववित्** सर्वा विद्या यस्य स सर्वविद्यो वा । **ज्ञः** सर्वविदित्यत्र यः सर्वज्ञः सर्वविदितिवन्न पुनरुक्तिर्भगवतः श्रीरामस्य सामान्यविशेषोभयविषयक ज्ञानाश्रयत्वात् । क्रियत इति **कर्म** नियतिशब्दवाच्यं जीवविहितं पुण्यपापलक्षणं कर्महतेन भगवता श्रीरामेणेशितं स्यादिति सङ्कल्पमात्रविषयीकृतं सन् **पृथिव्यप्तेजोऽनिलखानि** पृथिव्यप्तेजोनिलाकाशरूपेण **विवर्त्तत** विशेषेण वर्त्तते । निष्पन्नं भवतीत्यर्थः । इति चिन्त्यमित्थं विचारणीयम् ।। २ ।।

---

१. सर्वविद्यः - सर्वं वेत्तीति सर्वविद्यः । (शं.भा.)
सर्वविद्य इत्यस्य सर्वाः विद्याः यस्य सः । इत्यर्थः । अथवा सर्ववित् यः इति च्छेदः 'ज्ञः सर्ववित्' इति च, 'यः सर्वज्ञः सर्ववित्' इतिवदपुनरुक्तं भाव्यम् ।। (भाष्यपरिष्कारः)

**तत्कर्म कृत्वा विनिवर्त्य भूय -**
**स्तत्त्वस्य तत्त्वेन समेत्य योगम् ।**
**एकेन द्वाभ्यां त्रिभिरष्टभिर्वा**
**कालेन चैवात्मगुणैश्च सूक्ष्मैः ।। ३ ।।**

**आरभ्य कर्माणि गुणान्वितानि**
**भावांश्च सर्वान् विनियोजयेद्यः ।**
**तेषामभावे कृतकर्मनाशः**
**कर्मक्षये याति स तत्त्वतोऽन्यः ।। ४ ।।**

**प्र. - तत्कर्मेत्यादि ।** 'तत्त्वं नारायणः' (तै.ना.११) इति श्रुतेः नारायण एव तत्त्वम् । ततश्चायमर्थः इतरेभ्यो विनिवर्त्य तत्त्वस्य - भगवतः समाराधनं नित्यनैमित्तिक लक्षणं कर्म भूयः कृत्वा, **एकेन** - जायमानदशाप्रसृतभगवत्कटाक्षेण **द्वाभ्याम् ; 'यस्य** देवे परा भक्तिः यथा देवे तथा गुरौ' (श्वे.उ.६-२३) इत्युक्तरीत्या देवगुरुभक्तिभ्याम्, **त्रिभिः** - बाल्यपाण्डित्यमौनैः **अष्टभिः** योगाङ्गैश्च......? सहितस्सन् **तत्त्वेन** परमात्मना शेषत्वज्ञानलक्षणयोगं प्राप्य प्रारब्धत्वगुणयुक्तानि कर्माणि अवलम्ब्य वर्तमानान् **सर्वान् भावान्** - कामान् स्वस्मै **विनियोजयति** - भुङ्क्ते । स **तेषां** - कर्मफलभोगानाम् अवसाने फलाय वर्गितया कर्मणां नाशात्, 'तस्य तावदेव चिरम्' (छां.उ.६-१४-२) इत्युक्तरीत्या कर्मक्षये ब्रह्म **याति** - प्राप्नोति । स तत्त्वतः परमात्मनोऽन्य एव । अतो नैक्यशङ्का कार्येति भावः ।। ३,४ ।।

**आ.भा.** - 'अथ पुरुष इति चिन्त्यम्' (श्वे.उ.१-२) इत्युक्तस्य कर्मणायोगेन च सिद्धिमवाप्तस्य जीवापरपर्यास्य पुरुषस्य कारणत्वपक्षं निरस्यति - **तत्कर्मेति द्वाभ्याम् ।** अन्येभ्यः काम्यकर्मभ्यो विनवर्त्यतत्त्वस्य -

'यत्परं यद् गुणातीतं यज्ज्योतिरमलं शिवम् ।
तदेव परमं तत्त्वं कैवल्यपदकारणम्' ।। (श्रीरामस्तवराज ५) इति सनत्कुमारसंहितावचनप्रामाण्यात् परमतत्वस्य भगवतः श्रीरामस्य तदर्थं कर्म **तत्कर्म** समाराधनबुद्ध्या नित्यनैमित्तिकं कर्मभूयोऽनेकजन्मसु कृत्वा विधाय एकेन जनिसमये भगवच्छ्रीरामकृपाकटाक्षेण गुरूपसदनेन वा **द्वाभ्यां** 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ' । (श्वे.उ.६-२३) इति श्रुत्युक्तदेवगुरुभक्तिभ्याम्, त्रिभिर्बाल्यपाण्डित्यमौनैः

श्रवणमनननिदिध्यासनैर्वा, अष्टभिर्यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधि-पदवाच्यैरष्टभिर्योगाङ्गैश्च । अत्र वा शब्दश्चार्थे । **कालेन** मोक्षोपयोगिसमयेनात्**मगुणैः** प्रजापतिवाक्याभिहितापहतपाप्मत्वादिभिरष्टभिरात्मगुणैः सूक्ष्मैर्बहुजन्मानुष्ठितपुण्यसंस्कारैश्च विशिष्टः सन् तत्त्वेन सर्वेश्वरश्रीरामेण **योगं** शेषत्वज्ञानात्मकयोगं **समेत्य** - अवाप्य **गुणान्वितानि** प्रारब्धत्वगुणविशिष्टानि । भगवत्प्रीत्यात्मकत्वगुणविशिष्टानीत्यर्थः । **कर्माण्यारभ्य** अवलम्ब्य **सर्वान्** विश्वान् **भावान्** कामाँश्च **यो विनियोजयेत्** भुनक्ति । **तेषां** कर्मफलभोगानामभावेऽन्ते कृतकर्मनाशो भागवदुपासनेन उत्तरपूर्वाघश्लेष-विनाशविशिष्टः स भगवद्भक्तः **कर्मक्षये** प्रारब्धकर्मक्षये यात्यवाप्नोति । ब्रह्मेति शेषः । **स तत्वतो** परमतत्वाद् भगवतः श्रीरामादन्यः । अतः पुरुषपदवाच्यः सजीवो न जगत्कारणमित्यर्थः । अत एवोक्तं शारीरकमीमांसायां भगवद्भिर्बादरायणैः 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' । (ब्र.सू.४-४-१७) इति । तदाहुर्वृत्तिकाराः श्रीपुरुषोत्तमाचार्य-बोधायनमहाभागाः 'जगद्व्यापारवर्जसमानोज्योतिषा' इति ।। ३-४ ।।

**[कर्मणां विनियोगः]**

**आदिः स संयोगनिमित्तहेतुः**
**परस्त्रिकालादकलोऽपि दृष्टः ।**
**तं विश्वरूपं भवभूतमीड्यं[1]**
**देवं स्वचित्तस्थमुपास्य पूर्वम् ।। ५ ।।**

**स वृक्षकालाकृतिभिः परोऽन्यो**
**यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।**
**धर्मावहं पापनुदं भगेशं**
**ज्ञात्वात्मस्थममृतं विश्वधाम ।। ६ ।।**

**प्र.** - परमात्मोपासनमपि स्वात्मोपासनपूर्वकं कर्तव्यम् इत्याह - **आदिरिति । सः** पूर्वमन्त्रोक्तजीवः **संयोगे** समीचीनपरमात्मयोगे तत्प्राप्तौ आदिकारणम् - प्रधान-हेतुरिति यावत् - कालत्रयपरिच्छिन्नात् परत्वेन भिन्नत्वेन निरवयवत्वेन शास्त्रदृष्टः । **तं** कर्मवशात् अनन्तशरीरं **भवभूतं - भवं** - संसारं **भूतं** - प्राप्तम् - संसारिणमिति यावत् ।

---

१. कठोपनिषदि 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' (१-१७), इत्यत्र, जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगतम्य इति भाष्यकृता व्याख्यानात् तद्रीत्या इहापि ईड्यं देवमिति ब्रह्मात्मकत्वविवक्षापि भवेत् ।। (भाष्यपरिष्कारः)

**ईड्यं** स्तुत्यम् । अपहतपाप्मत्वादिगुणकमिति यावत् । अत एव **देवं** - द्योतमानं स्वप्रकाशज्ञानानन्दरूपं प्रथमत उपास्य, **स वृक्षेति ।** यस्मादयं चिदचित्प्रपञ्चः **परिवर्तते,** स वृक्षकालाकृतिभ्यः **परः** उत्कृष्टः - **वृक्ष**शब्देन छेदनार्हप्रकृतिप्राकृतमुच्यते - आसमन्तात् कृतिः यत्नो यस्येति **आकृतिः** कर्ता जीवः । प्रकृतिकालजीवेभ्यः उत्कृष्ट इत्यर्थः । ज्ञानोत्पत्तिप्रतिबन्धकपापानि अपनुद्य तदनुकूलपुण्यप्रवर्तकम्,

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' ।। (वि.पु.६-५-७४) इत्युक्तानां

ज्ञानादीनामीश्वरं विश्वस्य **धाम** - भूतमाधारभूतं मरणाद्यवद्यशून्य स्वात्मनि अन्तर्यामितया वर्तमानं ज्ञात्वा मुक्तो भवतीत्यर्थः ।। ५, ६ ।।

**आ.भा.** - अथ परमात्मोपासनस्य स्वात्मोपासनान्तरकर्त्तव्यतामाह - **आदिरिति । स** पूर्वमन्त्राभिहितो जीवः सम्यग् योगः **संयोगः** तत्र यानि पूर्वोक्तानि निमित्तानि तेषां हेतुः आदिः सम्यक् परमात्मावाप्तौ प्रधानं कारणं कालाद् भूतादिकालत्रयात् **परः** कालत्रयपरिच्छिन्नपर इत्यर्थः । न विद्यन्ते कला यस्य सोऽकलो निरवयवोऽपि दृष्टः । शास्त्रेष्विितिशेषः । **तं विश्वरूपं** कर्माधीनत्वेनामितदेहं **भवभूतं** संसारितामवाप्त**मीड्यं** स्तुत्यं **देवं** द्योतमानस्वभावम् । स्वप्रकाशज्ञानस्वरूपमिति यावत् । **स्वचित्तस्थं** स्वहृदये स्थितं तं स्वात्मानमुपास्य यस्मादयं प्रपञ्चश्चिदचिदात्मकः **प्रपञ्चः परिवर्त्तते स परः** परमात्मा वृक्षकालाकृतिभिरत्र तृतीया 'अन्यदाहुर्विद्यया' इत्यादिषु पञ्चम्यर्थे । वृश्च्यते विद्यत इति व्युत्पत्या प्रकृतिवाचकोऽत्रवृक्षशब्दः । आकाररूपार्थविवक्षणे वैय्यर्थ्यादत्राकृतिशब्द आसमन्तात् कृतिर्यस्येत्येवं कृतिमतो जीवस्य वाचकः । तथा च स परमात्मा प्रपञ्चापरिवर्त्तकेभ्यः प्रकृतिकालजीवेभ्योन्यो भिन्नोऽस्तीति शेषः । **धर्मावहं** ज्ञानोत्पत्यनुकूलसत्कर्मप्रवर्त्तकं **पापनुदं** ज्ञानोत्पत्तिप्रतिबन्धपापापनोदकं **भगेशम् -**

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' ।। (वि.पु.६-५-७४)

इत्यत्रोक्तज्ञानाद्यैश्वर्यषट्केश्वरम् । उक्तञ्च बोधायनवृत्तिकारभगवत्पुरुषोत्तमाचार्य-शिष्यवर्यैर्जगद्गुरुश्रीगङ्गाधराचार्यैः श्रीरामभगवत्वे -

---

वृक्षः - संसारवृक्षः । उक्तं च -
'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थसनातनः' । (कठो.२-६-१) इति

'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि षड्गुणाः ।
भगवत्वेनेरिताः सन्ति श्रीरामे भगवान् स तत् ।।
श्रीरामे भगवच्छब्दो मुख्यवृत्या प्रवर्त्तते ।
गौण एव स चान्यत्रषड्विधैश्वर्यलेशतः' ।। ३ ।। इति **विश्वधाम** विश्वस्याधारभूतम् अमृतं मरणशून्यम् । नित्यमित्यर्थः । स्वात्मस्थमन्तर्यामिरूपेण स्वात्मन्यवस्थितं तं परमात्मानं ज्ञात्वोपास्य मुक्तो भवतीति शेषः ।। ५-६ ।।

**[ज्ञानिनां तत्त्वानुभवः]**

**तमीश्वराणां परमं महेश्वरं**
**तं देवतानां परमञ्च देवतम् ।**
**पतिं पतीनां परमं परस्तात्**
**विदाम देवं भुवनेशमीड्यम् ।। ७ ।।**

**प्र. - तमीश्वराणामिति । विदाम** इति ज्ञानप्रार्थना । शिष्टं स्पष्टम् ।। ७ ।।

**आ.भा. -** अथ परमात्मज्ञानार्थं प्रार्थयति - **तमीति । ईश्वराणां** जगत्सृष्ट्यादिसमर्थानाञ्चतुर्मुखविष्णुशिवानां परमुत्कृष्टं महाँश्चासावीश्वरो महेश्वरस्तं **महेश्वरं** महेशानं **देवतानां** मनुष्याद्यपेक्षयाधिकदेवनशक्तिविशिष्टानामिन्द्रादिदेवानां मध्ये **परमं** देवतैवेति **दैवतं** पान्तीति पतयस्तेषां **पतीनां** विश्वपालकानां मध्ये **परमं पतिम् ।** 'पतिं विश्वस्ये'ति श्रुतेः । **देवं** द्योतमानस्वरूपम् । स्वयम्प्रकाशज्ञानानन्दस्वरूपमिति यावत् । 'ओं यो वै श्रीरामचन्द्रः स भगवान् यश्च ब्रह्मा विष्णुरीश्वरो यः सर्वदेवतात्मा भूर्भुवः स्वस्तस्मै वै नमो नमः' ।। (श्रीरामोत्तरतापनीयोपनिषत्)

'योगीन्द्रसंघैः शतसेव्यमानं नारायणं निर्मलमादिदेवम् ।
विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम् ।
श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि' ।। (सनत्कुमारसंहितायां श्रीरामस्तवराजः) 'भवान् नारायणो देवः' (रा.यु.कां.११७-१३) इत्यादिवचनानि भगवतः श्रीरामस्य देवत्वपरात्परात्वं च प्रमाणयन्ति । भुवनानामीशं भुवनेशं निखिललोकनियामकम् ।

'भवाब्धिपोतं भरताग्रजं तं भक्तप्रियं भानुकुलप्रदीपम् ।
भूतत्रिनाथं भुवनाधिपत्यं भजामि रामं भवरोगवैद्यम्' ।

'त्रैलोक्यनाथं सरसीरुहाक्षम्' (श्रीसनत्कुमारसंहिता) इत्यादिपाञ्चरात्रवचनप्रामाण्यात् । **ईड्यं** सर्वेषां देवमुनीनां स्तवनीयं **तं** प्रस्तुतं परमात्मानं सर्वेश्वरं श्रीरामं वयं **विदाम** जानीमः । अत्र प्रार्थनायां लोट्लकारः । अत्र 'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः' (अ.को.१-१-३०) इति कोषबलान्महेश्वरपदे रूढिर्न शङ्कनीया । कुतः? ईश्वराणामिति प्रतिनिर्देशात् अत एव श्रुतौ पञ्चरात्रे च भगवति श्रीरामे महेश्वरशब्दप्रयुक्तः । तथाहि -

"ओं यो वै श्रीरामचन्द्रः स भगवान् यश्च महेश्वरो भूर्भुवः स्वस्तस्मै वै नमो नमः" ।। (श्रीरामोत्तर.)

"वन्दामहे महेशानं चण्डकोदण्डखण्डनम् ।
जानकीहृदयानन्दं चन्दनं रघुनन्दनम्" ।। (सनत्कुमारसं.) इति ।। ७ ।।

**न तस्य कार्यं करणञ्च विद्यते**
**न तत्समश्चाभ्यधिकश्च दृश्यते ।**
**परास्य शक्तिर्विविधैव श्रूयते ।**
**स्वाभाविकी ज्ञानबलक्रिया च ।। ८ ।।**

**प्र. - न तस्येति । कार्यं** - शरीरम् । **करणम्** - इन्द्रियम् । ज्ञानबलाभ्यां संहिता सृष्टिसंहारादिलक्षणक्रिया **ज्ञानबलक्रिया**[१] । शिष्टं स्पष्टम् ।। ८ ।।

**आ.भा. -** अथ परमात्मनः प्राकृतदेहेन्द्रियाभाववत्वं समाभ्यधिकरहितत्वं शक्तिज्ञानादिगुणवत्वं परमात्मगुणानाञ्च स्वाभाविकत्वं सत्यत्वञ्चाभिधीयते - **नेति । तस्य** भगवतः श्रीरामस्य **कार्यं** प्राकृतं शरीरं **करणञ्च** प्राकृतेन्द्रियञ्च **न विद्यते** तेन **समस्तत्समोऽधिकश्च** ततोऽधिकश्चापिश्रुत्यादिषु **न दृश्यते** । भगवता तुल्योभगवतोऽधिकश्च कश्चिदपि न कुत्रापि नास्तीत्यर्थः । **अस्य** परमात्मनः श्रीरामस्य परोत्कृष्टस्वरूपेतरा वा **स्वाभाविकी** स्वभावतो विद्यमाना न तूपाधिवशात् सञ्जातेत्यर्थः । शक्तिरद्भुतकर्मकरण-सामर्थ्यम् । श्रूयते सर्वोत्कृष्टश्रुतिप्रमाणसिद्धाऽस्तीत्यर्थः । तदुक्तं श्रीरामभगवत्वे-

'सामर्थ्यमद्भुतस्याथ कर्मणः करणे च यत् ।
तद्धि शक्तितया प्रोक्तो गुणो भागवतो महान्' ।। इति ।

---

१. **ज्ञानक्रिया** - सर्वविषयज्ञानप्रवृत्तिः । (शं.भा.)
२. **बलक्रिया** - स्वसंनिधिमात्रेण सर्वं वशीकृत्य नियमनम् । (शं.भा.)

**श्रूयते** इत्येवं परमात्मगुणानां श्रुतिसिद्धत्वप्रतिपादनेन तेषां मिथ्यात्वप्रतिपादकाः प्रत्याख्याता वेदितव्याः । केवलं परमात्मनः शक्तिरेव तथाभूताऽपि तु तस्येतरे गुणा अपि तथाभूता इत्यत आह - **ज्ञानेति । ज्ञानं** नाम निखिलदेशकालवस्तुविषयक-प्रत्यक्षानुभवलक्षणः परमात्मगुणः । **बलं** नाम सर्वधारणसामर्थ्यं जगद्रचनायां श्रमाभावो वा । उक्तञ्चोभयमधिकृत्य श्रीरामभगवत्वे -

'स्वप्रकाशश्च सर्वेषां सर्वदा भासको विभुः ।
गुणश्चालोचकैः प्राज्ञैर्ज्ञानत्वेन प्रकीर्तितः ।।
सर्वधारणसामर्थ्यं गुणो बलतया मतः ।
जगतो रचनायां हि श्रमाभावोऽथवा च सः' ।। इति ।

ज्ञानं च बलं च ज्ञानबले ज्ञानबलाभ्यां सहिता क्रिया **ज्ञानबलक्रिया** । अत्र क्रिया नाम परमात्मनो जगत्सर्जनादिरूपो व्यापारः । अत्र चकारादखिलानां भगवद्गुण-क्रियादीनां संग्रहो ज्ञेयः ।। ८ ।।

**न तस्य कश्चित पतिरस्ति लोके**
**न चेशिता नैव च तस्य लिङ्गम् ।**
**स कारणं करणाधिपाधिपो**
**न चास्य कश्चिज्जनिता न चाधिपः ।। ९ ।।**

**प्र. - न तस्य** कश्चिदिति । **लिङ्गं** - ज्ञापकहेतुः । **करणाधिपो** जीवः । शेषमतिरोहितार्थम् ।

**आ.भा.** - अथ ब्रह्मपदवाच्यस्य भगवतः श्रीरामस्य सर्वपतित्वादिकमभिधत्ते - **न तस्य कश्चिदित्यादिना । लोके** कस्मिंश्चिदपि लोके **तस्य** पूर्वोक्तस्य भगवतः श्रीरामस्य **कश्चित्** पातीति पती रक्षको नास्ति । **न च** श्रीरामः कस्यचिद् रक्ष्य इत्यर्थः । भगवान् श्रीराम एव सर्वेषां रक्षक इति यावत् । अत एवोक्तं श्रीराममन्त्रप्रदेन श्रीवशिष्टर्षिगुरुणा पद्मोद्भवेन भगवता श्रीचतुर्मुखेन - 'शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः' इति 'त्वं त्रयाणां हि लोकानामादिकर्त्ता स्वयं प्रभुः इति च' (वा.रा.यु.कां.११७-१८) श्रीपवनकुमारेणाप्युक्तम् - 'रामस्य लोकत्रयनायकस्य' इति (वा.रा.सुं.कां.५१-४३) देवर्षिणा श्रीनारदेनाप्युक्तम् -

'नारायणं जगन्नाथमभिरामं जगत्पतिम् ।
कविं पुराणं वागीशं रामं दशरथात्मजम्' ।। इति (श्रीरामस्तवराज १८)

तस्य पूर्वोक्तस्य श्रीरामस्य कश्चिदीशिता नियामको नैवास्ति । **'तमीश्वराणां परमं महेश्वरम्'** (श्वे.उ.६-७) इति श्रुत्या तस्य सर्वेश्वराणामपि परममहेश्वरतायाः प्रतिपादितत्वात् । अत एवोक्तं रावणं प्रति चतुर्मुखगुरुणा भगवता श्रीप्राभञ्जनेन -

'सर्वलोकेश्वरस्येह कृत्वा विप्रियमीदृशम् ।
रामस्य राजसिंहस्य दुर्लभं तव जीवितम्' इति । (वा.रा.सुं.कां.५१-३९) ।

सनत्कुमारसंहितायां श्रीमता देवर्षिणाऽप्युक्तम् - 'भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम्' ।। इति (श्रीरामस्तवराज २९) । अत एवोक्तं श्रीरामार्थरत्नमञ्जूषायां श्रीरामशब्दं व्युत्पादयद्भिरस्मत्परमगुरुभिराचार्यवर्यैः श्रीहर्यानन्दाचार्यैः -

'ब्रह्मविष्णुशिवादीनां र वाच्यैश्वर्यशालिनाम् ।
गमश्चामोऽवितुं यस्य स रामः परिकीर्त्तितः ।। ९ ।।
महराजाधिराजैः रैरम्यते सेव्यते च यः ।
स्वामी च सर्वलोकानां स रामः परिकीर्त्तितः' ।। २१ ।। इति

श्रीराघवेन्द्रमङ्गलमालायामाचार्यवर्यैरप्युक्तम् -

'भयाभयविधातारः सर्वे यच्छासने स्थिताः ।
तस्मै हि निखिलेशाय राघवेन्द्राय मङ्गलम्' ।। ६३ ।। इति । **तस्य**

**पूर्वोक्तस्य श्रीरामस्य** (किञ्चित्) लिङ्गमनुभावः सद्धेतुरपि नैव विद्यते । तस्य **वेदैकवेद्यत्वात्** । तथैवोक्तं श्रीसनत्कुमारसंहितायाम् -

'वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम् ।
अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परत्वात्' ।। इति । (श्रीरामस्त. ६१) ।

एतद्विषयकमधिकं तु शारीरकमीमांसायाः शास्त्रयोनित्वाधिकरणस्यानन्दभाष्ये **वक्ष्याम** इत्यत्र संक्षेपः । **स श्रीरामः कारणमखिलस्य** जगतोऽभिन्ननिमित्तोपादानकारणम् । **'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'** (छां.उ.६-२-१) इति श्रुतिप्रामाण्यात् । **करणाधिपाधिपः** करणानि मन आदीन्येकादशेन्द्रियाणि तेषामधिपोऽधिपतिर्जीवस्तस्याधिपः स्वामी करणानामधिपा इन्द्रियाधिष्ठातारः सुरास्तेषामधिपो वा । **अस्य** भगवतः श्रीरामस्य **कश्चिज्जनिता** जनयिता जनक इत्यर्थः । **च नास्ति** । 'यतो वा इमानि भूतानि जायन्ते' (तै.उ.भृ.१-२)

इत्यादिश्रुतयः 'प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः' इत्यादिस्मृतयश्चात्रानुसन्धेयाः । एवमस्य **श्रीरामस्य** कश्चिदधिपः स्वामी च नास्तीत्यर्थः । सुष्ठूक्तमाचार्यवर्यैः श्रीराघवानन्दाचार्यैः -

'विष्णवे विबुधाराति जिष्णवे प्रभविष्णवे ।
सर्वलोकैकनाथाय राघवेन्द्राय मङ्गलम्' ।। इति । (श्रीराघवेन्द्रमङ्गल माला) ।। ९ ।।

**[मुक्तये प्रार्थना]**

**यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः ।**
**देव एकः समावृणोति स नो दद्याद् ब्रह्माप्ययम् ।। १० ।।**

**प्र. - यस्तन्तुनाभ** इति । लूताख्यः कीटविशेषः स्वसंनिहितजन्तुविशेषं यथा तन्तुभिः आवृणोति, एवं प्रकृतिजैः प्राकृतैः तत्त्वैः **स्वभावतः** स्वेच्छातः चिद्वर्गमावृणोति लुप्तज्ञानं करोति (यः?) स देवोऽस्माकं ब्रह्मणि **अप्ययमा**त्यन्तिकं लयं करोतु । **मुक्तस्य ब्रह्मण्यप्ययो** नाम भेदकाकारास्फुरणम् ।। १० ।।

**आ.भा. -** जीवानामोक्षापादनायैव भगवतः स्पष्ट्यायासस्तत्साफल्याय मोक्षं याचते - **य इति । यः** प्रसिद्ध **एकः** प्रधानो **देवः** सर्वेश्वररामः **तन्तुभिः** स्वशरीरजैः **सूत्रैस्तन्तुनाभ** ऊर्णनाभिरिव प्रधानाज्जाताः प्रधानजास्तैः 'यस्य पृथिवी शरीरम्' (बृ.उ.५-७-७) इत्यादि श्रुतिसिद्धस्वशरीरभूतकृतिजैर्महत्तत्वादिभिस्तात्वैः **स्वभावतः** स्वेच्छया चेतनवर्गमा**वृणोति** सङ्कुचितज्ञानतामापादयति । यथा तन्तुनाभपदवाच्यो जन्तुविशेषः स्वदेहाज्जातैस्तन्तुभिरितस्ततो भ्रमणकर्त्तारं स्वसमीपस्थं जीववर्गमावृणोति तथैव देवपदवाच्य-सर्वेश्वररामोपि स्वसङ्कल्पात् सृष्टैः प्राकृतैर्महत्तत्वादिभिस्तत्त्वैः स्वोद्धारमार्गात् परिभ्रष्टान् जीवानावृणोतीत्यर्थः । तदुक्तं भगवद्भिः श्रीश्यामानन्दाचार्यैः -

'शरीरं चेन्द्रियं दत्वा सृष्टिकाले तु राघवः ।
अन्तर्यामितया जीवं स्वीयां सत्तां च रक्षति ।।
सत्सङ्गादिगुणाश्चाथ समुत्पाद्य हि देहिनि ।
सदाचारेण संयोज्य चापराधान् विमृश्यति ।।
निवार्य भवसम्बन्धमर्चिरादिपथेन हि ।
स्वधामानुभवौ दत्वा नित्यां सेवां ददाति च' ।। इति । (नवरत्नी)

**स प्रधानजैस्तत्त्वैर्जीवावरणकर्त्ता** देवो रामो न अस्माकं **ब्रह्माप्यय** ब्रह्मणि इति 'रामपदेनासौ परं ब्रह्माभिधीयते' इत्यादिश्रुतिबलाद् ब्रह्मपदवाच्ये स्वस्मिन् श्रीरामेऽप्ययमात्यन्तिकं

लयम् । भेदाकारेणास्फुरणम् । मोक्षमिति यावत् । **दद्यात्** सम्पादयेत् । **ब्रह्माव्ययमिति** पाठे तु अव्ययं नित्यम् भावप्रधाननिर्देशादत्र ब्रह्मपदस्य ब्रह्मात्ममर्थः । जगद्व्यापारादिशून्यत्वविशिष्टगुणाष्टकमिति यावत् । तद् **दद्यात्** प्रयच्छतु । मोक्षं दद्यादित्यर्थः ।। १० ।।

**एको देवः सर्वभूतेषु गूढः**
**सर्वव्यापी सर्वभूतान्तरात्मा ।**
**कर्माध्यक्षः सर्वभूताधिवासः**
**साक्षी चेता केवलो निर्गुणश्च ।। ११ ।।**

**प्र. - एको देव** इति । इतराविदिततया वर्तमानः, सर्वव्यापितया **सर्वभूतात्मा** - तच्छरीरेष्वनुप्रविष्टः, कर्मसु प्रेरकः, **चेता** - 'चिञ् चयने' (धा.पा.१२५२) इति हि धातुः - सकलप्रपञ्चनिर्माता, त (अ) थापि गुणत्रयवश्यत्वाभावात् (च?) केवलोदासीनः, ईशः (?) 'अपहतपाप्मा दिव्यो देव एको नारायणः' (अध्यात्म.उ.१) इति प्रसिद्धो दिव्यो देव एक एव इत्यर्थः ।। ११ ।।

**आ.भा. -** अथ मोक्षप्रदातारं **देवं** भगवन्तं श्रीरामं निरूपयति - **एक** इत्यादिभिः । **सर्वभूतेषु** निखिलभूतेषु गूढ इतराज्ञातरूपेण विद्यमानः **सर्वव्यापी** 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (महा.ना.९-५) इति श्रुतेर्विश्वान्तर्बहिर्व्याप्तिशीलोऽत एव **सर्वभूतान्तरात्मा** सर्वेषां कर्मसु प्रेरयिता । सर्वान्तर्यामीत्यर्थः । **कर्माध्यक्षः** कर्मणां फलप्रदाने प्रधानः । कर्मणां फलप्रदानेऽन्याध्यक्षताविरहित इत्यर्थः । सर्वेषु भूतेषु नियन्तृरूपेणाधिवसतीति **सर्वभूताधिवासः** सर्वभूतनियायकः **साक्षी** 'यः सर्वज्ञः सर्वविदि'ति श्रुतेः सकलस्य सामान्यविशेषरूपेण शास्त्रादेव वेत्ता **चेता** विश्वनिर्माणकर्त्ता **केवलो** विश्वनिर्माणकर्त्तृत्वेऽपि गुणत्रयावश्यत्वेनावाप्तसमस्तकामतया फलाभिसन्धिपूर्वक-विश्वनिर्मातृत्वाभावेन चौदासीन्यविशिष्टः कल्याणगुणविशिष्टत्वेऽपि प्राकृतगुण-प्रतिभटत्वान्निर्गुण एकोऽद्वितीयः । स्वसमाम्यधिकरहित इत्यर्थः । देवोद्योतनस्वभावत्वविशिष्टः स्वयंप्रकाश इत्यर्थः भगवान् श्रीरामोऽस्तीति शेषः ।। ११ ।।

**एको वशी निष्क्रियाणां बहूना-**
**मेकं बीजं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीराः**
**तेषां सुखं शाश्वतं नेतरेषाम् ।। १२ ।।**

**प्र. - एको वशी** इति । **निष्क्रियाणां -** स्वतः प्रवृत्तिरहितानां सर्वचेतनानां **वशी -** स्वाधीनसर्वचेतनवर्ग इति यावत् - **एकं** जगद्बीजमव्यक्तलक्षणं महदहङ्कारादिरूपेण **यो बहुधा करोति, तं** स्वान्तर्यामिणं **ये** जानन्ति; त एव मुक्ता भवन्ति इत्यर्थः ।। १२ ।।

**आ.भा. - यो** बहूनामसंख्यातानां निष्क्रियाणां स्वतन्त्रप्रवृत्यात्मकक्रियारहितानां **चेतनाचेतनानामेकः** प्रधानो **वशी** वशकर्त्ता । निजाधीनताऽऽपादक इत्यर्थः । समस्ताश्चेतनाचेतना न स्वतन्त्रा नान्यपरतन्त्रः किन्तु भगवतः श्रीरामस्यैव वशवर्त्तिनः सन्तीति यावत् । '**एकं बीजं** विश्वस्यैकं प्रकृत्याख्यं बीजं यश्च बहुस्याम्' इति स्वसङ्कल्पतो **बहुधा** महत्तत्वादिबहुप्रकारविशिष्टं **करोति** विदधाति **तं** समस्तचेतनाचेतनवर्गस्य स्ववश्यताऽऽपादकं प्रकृतेर्महत्तत्वाद्यनेकावस्थावैशिष्ट्यापादकं च आत्मस्थं स्वान्तर्यामिणं भगवन्तं श्रीरामं **ये धीराः** विवेकशालिनः पुरुषा अनुपश्यन्ति अवगच्छन्ति तेषामेव **शाश्वतं सुखं** शाश्वतसुखात्मकं मोक्षो भवतीतिशेषः । **नेतरेषां** भगवज्ज्ञानविरहितानां जनानां तु मोक्षो नैव भवतीति ध्येयम् ।। १२ ।।

**[१]नित्यो नित्यानां चेतनश्चेतनाना -**
**मेको बहूनां यो विदधाति कामान् ।**
**तत्कारणं सांख्ययोगाधिगम्यं**
**ज्ञात्वा देवं मुच्यते सर्वपाशैः ।। १३ ।।**

**प्र. - नित्य** इति । अनित्यानां चेतनानां **बहूनां नित्य एक एव** चेतनस्सन् (यः?) **कामान् विदधाति,** तज्ज्ञानं मुक्ति (हेतु?) रित्यर्थः । अत्र नित्यचेतनानाम् अनित्यत्त्वम् धर्मभूतज्ञानसंकोचादिधर्मयोगादिति द्रष्टव्यम् । **नित्यानां** मध्ये **नित्यः** अत्यन्तनित्यः, **चेतनानां** मध्ये **चेतनः** परमचेतनः इत्यर्थाश्रयणेऽपि न दोषः । नित्यत्वं चेतनत्वतारतम्यञ्च विवक्षाविशेषेण द्रष्टव्यम् । **सांख्ययोगाधिगम्यं -** सांख्य योगशास्त्रयोः तात्पर्यविषयभूतम् । 'सांख्यं योगः पाञ्चरात्रं वेदः पाशुपतं तथा । आत्मप्रमाणान्येतानि' (महा.भा.शां.प.३५०-१) इत्युक्तेरिति भावः ।। १३ ।।

**आ.भा. -** अथ निखिलाभिलषितपदार्थप्रदजगत्कारणलक्षणदेवपदवाच्य-भगवच्छ्रीरामज्ञानान्मुक्तिर्भवतीत्येतदभिदधाति - **नित्य** इति । **बहूनां** बहुसंख्याकानां **नित्यानाम्** उत्पत्तिविनाशशून्यानां मध्ये **चेतनः** परमचेतनः **एक एव यः**

---

१. 'नित्योऽनित्यानाम्' इति रङ्गरामानुजभाष्य सम्मतः पाठः ।

कामानपेक्ष्यमाणानर्थान् **विदधाति** सम्पादयति **तत् कारणं** जगतोऽभिन्ननिमित्तोपादानात्मको हेतुः **सांख्ययोगाधिगम्यं** ज्ञानयोगकर्मयोगविज्ञेयं **देवं** देवपदाभिधेयं भगवन्तं श्रीरामं ज्ञात्वा सर्वे च ते पाशाः सर्वपाशास्तैखिलैः पाशवद्बन्धनकारकैः कर्मभि**र्मुच्यते** मुक्तो भवति । अत्र यद्यपि 'अजो नित्यः शाश्वतोऽयं पुराणो' (कठ.उ.२-१८) इति भगवद्वचनबलाद् जीवानां नित्यत्वमेवास्त्यत एवोक्तं श्रौतप्रमेयचन्द्रिकायामाचार्यचक्रवर्तिभिः श्रीश्रियानन्दाचार्यैः -

"पयः पानानुसन्धानाच्चेतनत्वात् तथैव च ।
यस्यात्मेतिश्रुतेश्चाथ नानात्वव्यपदेशतः ।।
नित्यो देहातिरिक्तश्च देहश्चांशः परात्मनः" । इति । तथापि दुराग्रहवशात् केचिदिह नित्यो नित्यानामित्यत्र नित्योऽनित्यानामिति पाठमङ्गीकुर्वन्ति । तथापाठेऽपि धर्मभूतज्ञान-संकोचयोगाच्चेतनानामनित्यत्वमिति नास्त्यत्र कश्चिद्दोषावसर इति सुधियोऽभिदधति ।। १३ ।।

**[1]न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनु भाति सर्वं**
**तस्य भासा सर्वमिदं विभाति ।। १४ ।।**

**प्र. - न तत्रेति** । अयं मन्त्रः अन्यत्र बहुकृत्वो व्याकृतः ।। १४ ।।

**आ.भा. -** अथ स्वतो भासमानस्य भगवतः सर्वभासकत्वम्प्रतिपादयति - **न तत्रेति** । तत्र प्रस्तुतो जगत्कारणे परब्रह्मणि भगवति श्रीरामे सूर्यो सहस्रकरिणमाली भगवान् भास्करो **न भाति** प्रकाशं न विदधाति, चन्द्रश्च तारकानि चैषां समाहारश्चन्द्रतारकशशितारकचक्रं **न भाति** प्रकाशं न करोति, **इमा विद्युतो न भान्ति** प्रकाशं न कुर्वन्ति । सर्वेषां तेजःशालिनं भास्करादीनां तेजांसि ब्रह्मतेजसाऽभि-भूतानीत्यर्थः । **कुतोऽयमग्निः** भातीति शेषः । तर्हि पूर्वोक्तभास्कराद्यपेक्षयाऽत्यन्ताल्पतेजः शीलस्यानलस्स्य वराकस्य तेजसो ब्रह्मतेजसाऽभिभवे किमु वक्तव्यमित्यर्थः । तर्हि सर्वेषां भानं कुत इत्याशङ्कायामाह - **तमेवेति** । **तमेव** भगवन्तं श्रीरामं **भान्तमनु** पश्चात्

---

१. अयं मन्त्रः कठवल्ल्यां (५-१५) मुण्डके (२-२-१०) च पठ्यते ।।
तदुक्तं गीतायाम् -
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।। (गी.१५-६)

**सर्वं** भाति **तस्य** भगवतः श्रीरामस्य **भासा** तेजसैवेदं **सर्वं** विभाति प्रकाशत इत्यर्थः । आदित्यादीनां तेजांसि भगवदीयान्येव न स्वीयानीतिभावः । तदुक्तं गीतायाम् -

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (भ.गी.१५-१२) इति । भगवतस्तेजसोऽभावे सर्वमिदं तिमिराच्छन्नमेव स्यादित्येतत् ।। १४ ।।

**एको हँसो भुवनस्यास्य मध्ये**
**स एवाग्निः सलिले संनिविष्टः ।**
**तमेव विदित्वाऽति मृत्युमेति**
**नान्यः पन्था विद्यतेऽयनाय ।। १५ ।।**

**प्र. - एक** इति । **भुवनस्य** - चिदचित्प्रपञ्चस्य **मध्ये,** पक्षिसंघे राजहंसवत् विराजमानः । 'यमन्तस्समुद्रे कवयोः वदन्ति' (तै.ना.१-३) इति समुद्रसलिलसंनिविष्टः **स एव अग्निः -** अग्रनेता मोक्षप्रदः संसारपाशदाहकः इति वार्थः । शिष्टं स्पष्टम् ।। १५ ।।

**आ.भा. -** अथ भगवत्प्रापकं भगवदुपासनमेवेत्येतदभिधत्ते - **एक** इति । **अस्य भुवनस्य** चेतनाचेतनलक्षणस्य जगतो **मध्य एको** मुख्यो **हंसः** पक्षिणां मध्ये हंस इव स्थित **अग्रे** नयतीत्यग्निरग्रनेता मोक्षदाता संसारबन्धदाहको वा **सलिले** समुद्राम्भसि सन्निविष्टः तमेव सर्वेश्वरं श्रीरामं विदत्वोपास्याति **मृत्युं** मृत्योरतिक्रमम् **एति** प्राप्नोति । मृत्युमतिक्रम्य परमपदमवाप्नोतीत्यर्थः । ईयत इत्ययनं प्राप्यं तस्मा **अयनाय** भगवत्प्राप्तये भगवत्प्राप्तिहेतवे भगवत्प्रसादाय वेत्यर्थः । **अन्य** भगवदुपासनं विना **पन्थाः** अन्योऽध्वा । उपाय इत्यर्थः । न विद्यते न वर्त्तते 'रामो ब्रह्म परात्परं श्रुतिमतं भक्त्यैव निःश्रेयसम् इत्याचार्योक्तेः' ।। १५ ।।

**स विश्वकृत् विश्वविदात्मयोनिर्ज्ञः**
**कालकालो गुणी सर्वविद्यः ।**
**प्रधानक्षेत्रज्ञपतिर्गुणेशः**
**संसारमोक्षस्थितिबन्धहेतुः ।। १६ ।।**

**प्र. - स विश्वेति । विश्वकृत् -** सर्वकर्ता, **विश्ववित् -** सर्वं प्राप्तः, 'विद्लृ लाभे' (धा.पा.१४३३) इति हि धातुः **आत्मयोनिः** - आत्मा योनिः स्थानं यस्य स तथोक्तः । जीवान्तर्यामीत्यर्थः । **ज्ञः** - सर्वज्ञः, **कालकालः** - कालस्यापि नियन्ता; **सर्वविद्यः** - सर्वविद्याप्रवर्तकः, **प्रधानक्षेत्रज्ञपतिः** - प्रकृतिजीवयोः शेषी, **गुणेशः** - ज्ञानादिषाड्गुण्यपरिपूर्णः, **संसारस्य** - प्रकृतिसम्बन्धलक्षणस्य मोक्षे च तत्स्थितौ च हेतुरित्यर्थः ।। १६ ।।

**आ.भा.** - अथ भगवतो विश्वकर्तृत्वादिकमापादयति - **स विश्वकृदिति ।** सः प्रस्तुतो भगवान् श्रीरामो विश्वं करोतीति **विश्वकृत्** सर्वकारकः सर्वहारकश्च, विश्वं विन्दतीति **विश्ववित्** सर्वं प्राप्तः, आत्मा योनिः स्थानं यस्य स आत्मयोनिर्जीवान्तर्यामी, जानातीति ज्ञो विभुः ज्ञानाश्रयः सर्वज्ञः इत्यर्थः, कालस्यापि कालः कालनियन्तेत्यर्थः, प्रशस्ता गुणाः सन्त्यस्येतिगुणी दिव्यानन्तगुणविशिष्टः सर्वा विद्या अस्य सन्तीति सर्वविद्यः **सर्वविद्या** प्रवर्त्तकः, प्रधानं च क्षेत्रज्ञश्चेति प्रधानक्षेत्रज्ञौ तयोः पतिः **प्रधानक्षेत्रज्ञपतिः** प्रकृति पुरुषस्वामी, गुणानामीशो **गुणेशो** ज्ञानादिगुणपरिपूर्णः सत्वादिगुणनियन्ता वा, **संसारमोक्ष-स्थितिबन्धहेतुः** संसारान्मोक्षे संसारस्थित्यात्मके बन्धे च हेतुः कारणमित्यर्थः ।। १६ ।।

**स तन्मयो ह्यमृत ईशसंस्थो**
**ज्ञः[1] सर्वगो[2] भुवनस्यास्य गोप्ता ।**
**य ईशेऽस्य जगतो नित्यमेव**
**नान्यो हेतुर्विद्यत ईशनाय ।। १७ ।।**

**प्र. - स तन्मय** इति । **सः** - परमात्मा **तन्मयः** - तत्प्रचुरः । तदात्मक एव; नान्यात्मकः । अनन्यप्रेर्य इति यावत् । **अमृतः** - असंसारी । **ईशे** - ईशनव्यापारे सम्यक् स्थितिः यस्येति तथोक्तः । **य ईशे** - यो नित्यमीष्टे । यस्य च ईशनम् अनन्यहेतुकं **नित्यम् ।** मोक्षदशायामप्यनपायी इत्यर्थः । शिष्टं स्पष्टम् ।। १७ ।।

**आ.भा. - स तन्मय** इति । **स** पूर्वोक्तो भगवान् श्रीरामः **तन्मयः** - तदात्मको हि, **अमृतः** संसारी, **ईशसंस्थः** - ईशनसंस्थितिकः, **ज्ञः** सर्वज्ञः **सर्वगः** सर्वगतः, अस्य चिदचिल्लक्षणस्य **भुवनस्य गोप्ता** रक्षकः, **अस्य** जगतो **नित्यमीशे** नियमनं करोति यश्च नित्यमेतज्जगन्नियन्तेत्यर्थः, नित्यमित्यनेन मोक्षेपीश्वरस्येशानव्यापारो भवतीत्यर्थो लभ्यते । ईशानायान्यो **हेतुर्न विद्यते ।** भगवतो जगदीशितृत्वमन्यहेतुकं न भवतीत्यर्थः ।। १७ ।।

**[भगवच्छरणागतिः]**

**यो ब्रह्माणं विदधाति पूर्वं**
**यो वै वेदाँश्च प्रहिणोति तस्मै ।**
**तँ ह देवमात्मबुद्धिप्रकाशं**
**मुमुक्षुर्वै[3] शरणमहं प्रपद्ये ।। १८ ।।**

---

१. **ज्ञः** - जानातीति ज्ञः ।

२. **सर्वगः** - सर्वत्र गच्छति इति सर्वगः ।

३. मुमुक्षु मुक्तिकामोऽहं श्वेताश्वतरो मुनिः ।।

**प्र.** - 'पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः' (कठ.उ.३-११) इति वशीकार्यपरम्परा विश्रान्तिभूमिभूतभगवद्वशीकरणोपायभूतप्रपदनमन्त्रमाह - **यो ब्रह्मणम्** इति । **यः** स्वनाभिपद्मे **ब्रह्माण**मुत्पाद्य तस्य वेदप्रदानेन जगत्सर्गशक्तिमहितवान्, तं स्वविषयबुद्धिप्रकाशहेतुं मुमुक्षुः अहं शरणं प्रपद्ये इत्यर्थः । **आत्मबुद्धेः** प्रकाशो यस्मात् स **आत्मबुद्धिप्रकाशः** । तद्विषयबुद्धिस्फुरणस्य तदनुग्रहायतत्वात् इत्यर्थः ।। १८ ।।

**आ.भा.** - अथ भगवतो मुमुक्षुशरणत्वमाह - **य** इति । **यो** लोके शास्त्रे च जगत्कारणत्वेन प्रसिद्धो भगवान् श्रीरामः पूर्वं सृष्ट्यादौ 'भवान्नारायणो देवः' इति वचनबलात् स्वस्य नारायणस्वरूपस्य नाभिकमले **ब्रह्माणं** चतुर्मुखं **विदधात्युत्**पादयति **यो वै** यश्चवै तस्मै स्वेनोत्पादिताय विधये **वेदांश्च** सर्वविद्यानिधानरूपान् **वेदांश्च प्रहिणोति** प्रेषयति प्रददातीत्यर्थः । **उक्तञ्चैतद्** वसिष्ठसंहितायां चतुराननस्य मानसैः पुत्रैः श्रीराममन्त्रप्रदाचार्यैर्महर्षिवसिष्ठैः -

'सृष्ट्यादौ च सिसृक्षुः श्रीरामो विधिं विधाय हि ।
सृष्टये प्रेषयामास वेदं ज्ञानमहानिधिम्' ।। इति ।

अहं तु ह्यात्मबुद्धिप्रकाशं स्वविषयकबुद्धिप्रकाशकं देवं ब्रह्मेशानादिसर्वपूज्यं भगवन्तं श्रीरामं शरणं प्रपद्ये

'सकृदेव प्रपन्नाय तवास्मीति य याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम' ।। (रा.यु.कां.१८-३३) इति भगवच्छ्रीरामोक्त्या भगवच्छ्रीरामप्रपत्तेरेव सर्वाभयनिदानत्वात् सर्वेश्वरश्रीराममेव शरणमहं प्रपद्ये । उक्ता च सकृद्रामप्रयत्त्यैव परधामावाप्तिर्जगद्गुरुभिः श्रीचिदानन्दाचार्यैर्न्यासकलानिधौ -

'नावाप्यते परं दाम तपो योगसमाधिभिः
सकृद्रामप्रपत्त्यैव पाणिभिः प्राप्यते हि तत्' ।। इति ।

ततो भगवच्छ्रीरामप्रपत्तिरेव मोक्षार्थं विधेयं मुमुक्षुभिरिति भावः ।। १८ ।।

**निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।**
**अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ।। १९ ।।**

**यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।**
**तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ।। २० ।।**

**प्र.** - उक्तब्रह्मज्ञानाभावे मोक्षसंभावनैव नास्तीत्याह - **निष्कलमिति** मन्त्रद्वयेन । आकाशस्य चर्मकटादिवत् वेष्टनं यदा अल्पशक्तयो मनुष्याः करिष्यन्ति, तदा **निष्कलं** -

निरवयवं **निष्क्रियं** - कृतकृत्यं **शान्तम्** - अशनायाद्यूर्मिषट्करहितं **निरवद्यम्** - आश्रितपराङ्मुखत्वावद्यरहितं **निरञ्जनम्** - असङ्गस्वभावम् **अमृतस्य** मोक्षस्य **परं** - मुख्यं **सेतुं दग्धेन्धनानलवत्** स्वप्रकाशकं **देवमविज्ञाय** दुःखस्य नाशो भवति । यथा आकाशस्य चर्मवत् वेष्टनमसंभावितम्, एवं परमात्मज्ञानमन्तरेण मोक्षोऽसंभावित इत्यर्थः ।। १९,२० ।।

**आ.भा.** - अथ भक्त्यभावे प्रपत्तिवद् ब्रह्मज्ञानाभावेऽपि किं किञ्चिदुपायान्तरं स्यान्मुक्तिसाधकमित्याशङ्कामपाकरोति - **निष्कल**मित्यादिमन्त्रद्वयेन । यदा मानवाः **चर्मवदाकाशं** नभो **वेष्टयिष्यन्ति** तदा निष्कलम् अवयवरहितं **निष्क्रियं** कर्तृत्वाभिमान-शून्यत्वादावाप्तसमस्तकामत्वेन प्रयोजनरहितत्वात् संकल्पमात्रेण सर्वविधायकत्वाद् वा क्रियारहितं **शान्तं** अशनायाद्यूर्मिषट्कशून्यं **निरवद्यं** स्वाश्रितपराङ्मुखत्वादिदोषहीनं **निरञ्जनं** निरवलेपम् **अमृतस्य** मोक्षस्य **परं सेतुं** मर्यादास्वरूपं चरमं प्राप्यमित्यर्थः । **दग्धेन्धनानलमिव** स्वयम्प्रकाशमानं **देवं** सर्वपूज्यं भगवन्तं श्रीरामम् अविज्ञायाननुभूय **दुःखस्यान्तो** विनाशो भविष्यति । परब्रह्मश्रीरामज्ञानाभावादशायामाकाशवेष्टनस्यासम्भावनेन मोक्षस्याप्यसम्भावनैवास्तीतिभावः ।। १९,२० ।।

**तपः प्रभावाद्देवप्रसादाच्च**
**ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।**
**अत्याश्रमिभ्यः[१] परमं पवित्रं**
**प्रोवाच सम्यगृषि संघजुष्टम् ।। २१ ।।**

**प्र.** - **तप** इति । 'मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं परमं तपः' ( ) इत्युक्तचित्तैकाग्र्यलक्षणतपःप्रभावाच्च (त् परमात्मानुग्रहाच्च?) संपन्नब्रह्मविज्ञानः **श्वेताश्वतरनामा** ऋषिः **अत्याश्रमिभ्यः**[१] 'अति पूजायाम्'[२] (धा.पा.६१) पूज्याश्रययुक्तेभ्यः परमहंससन्यासिभ्यः **ऋषिसंघैः** वामदेवादिभिः **जुष्टं** - सेवितं **परमं पवित्रं ब्रह्म प्रोवाच** इत्यर्थः ।। २१ ।।

---

१. **अत्याश्रमिभ्यः** इत्यत्र अतिशयिताश्रमशालिभ्यः इत्यर्थः। 'अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विज': इति अनाश्रमावस्थानस्य निषिद्धतया तादृशानामुत्तमपात्रतया ग्रहणायोगादित्याशयेन अति पूजायामित्युक्तम् । (भाष्यपरिष्कारे)

२. धातुपाठे 'अति बन्धने इत्यस्ति' ।

**आ.भा. -** अथोक्तस्य मोक्षहेतुभूतस्य ब्रह्मज्ञानस्याधिकारिणमधिकृत्योपदिशति - **तपः प्रभावात् इति ।** तपसः कृच्छ्रचान्द्रायणादेः प्रभावाद् देवस्य सर्वाराध्यस्य भगवतः श्रीरामस्य प्रसादात् परानुग्रहाच्च यद्वैवार्थकोऽत्र चकारः । तथा च **तपःप्रभावाद् यो देव प्रसादः** तस्मादेवेत्यर्थः । **विद्वान्** समापन्नब्रह्माविज्ञानः श्वेताश्वतर एतन्नामकः कश्चिद् ऋषिरथ ब्रह्मज्ञानावाप्त्यनन्तरमत्याश्रमिभ्योऽतिरत्रपूजार्थकस्तस्मात् पूज्याश्रमिभ्यः न **चात्याश्रमिभ्य** इत्यस्याश्रमशून्येभ्य इत्यर्थः स्यादिति वाच्यमाश्रमरहितस्य नरस्य कृच्छ्रेण शुद्धेरुक्तत्वात् । तथा हि -

'न चानाश्रमिणा भाव्यं नरेण हितमिच्छता ।

अनाश्रमी यतश्चात्र नरः कृच्छ्रेण शुध्यति ।। (वशिष्ठसंहिता) अन्यत्रापि - 'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः'। इति । **ऋषिसंघै**र्वशिष्ठागस्त्यपराशर-विश्वामित्रभरद्वाजादिमहर्षिसमूहैः **सम्यग् जुष्टं** सेवितं परममत्युत्कर्षशालि **पवित्रं** स्वभावतोऽपास्तदोषसंघत्वान्निरतिशयशुद्धिसमन्वितं **ब्रह्म** स्वरूपेण गुणेन देहेन चात्यन्तबृहत्तामापन्नं -

'रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।
इतिरामपदेनासौ परब्रह्माभिधीयते ।।
भवान्नारायणो देवः श्रीमांश्चक्रायुधः प्रभुः ।
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ।।
अक्षरं ब्रह्मसत्यं च मध्ये चान्ते च राघव' । इत्यादिश्रुतिस्मृतिप्रमाणाद् ब्रह्मपदाभिधेयं भगवन्तं श्रीरामं प्रोवाच उक्तवान् **ह** इति प्रसिद्धौ ।। २१ ।।

**[ब्रह्मविद्याधिकारनिरूपणम्]**

**वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् ।**
**नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ।। २२ ।।**

**प्र. - वेदान्त** इति । वेदान्तेषु अतिरहस्यतया निगूढं **पुराकल्पे** ब्रह्मणे उपदिष्टमेतत् विज्ञानं शान्तेभ्यः पुत्रेभ्यः शिष्येभ्य एव प्रब्रूयात्; नान्येभ्यः इत्यर्थः ।। २२ ।।

**आ.भा. - वेदान्ते** इत्येकवचनं जातौ । वेदान्तेषूपनिषत्सु **परम**मत्यन्तं **गुह्यं** रहस्यत्वेन गोपनीयं **पुराकल्पे प्रचोदितम्** उपरिष्टमेतद् विज्ञानं **अप्रशान्ताय** शान्तिशून्याया-पुत्राय पुत्ररहितायाशिष्याय शिष्यभावविरहिताय च **न दातव्यं** - अतिरहस्यात्मक-मेतद्ब्रह्मज्ञानं प्रशान्ताय पुत्राय शिष्यायचैवोपदेष्टव्यं नान्यस्मा इत्यर्थः ।। २२ ।।

**यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।**
**प्रकाशन्ते महात्मनः इति ।। २३ ।।**

**।। इति षष्ठोऽध्यायः ।।**

**।। श्वेताश्वतरोपनिषत् समाप्ता ।।**

**प्र. -** भगवद्विषये गुरुविषये च उत्कृष्टभक्तिशून्यानाम् उक्तार्था उपदिष्टा अपि दुर्ज्ञाना इत्याह - **यस्य देवे** इति । **यस्य** भगवत्युत्कृष्टा **भक्तिः** तत्तुल्या **गुरावपि** भक्तिः, **तस्यैव महात्मनः एते** अर्था भासन्ते; नेतरेषामित्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था (आदरार्था च ) ।

एतदध्यायान्तर्गतवाक्यविषयमधिकरणं लिख्यते -

तृतीयाध्याये उभयलिङ्गपादे वेदान्ते जगत्कारणतया प्रतिपाद्यमानस्यात्मनः, 'अथ च आत्मा स सेतुर्विधृतिः' (छां.उ.८-४-१) इति सेतुत्वश्रवणात् सेताश्च प्राप्यान्तरप्रापकत्वस्यैव दर्शनेन ब्रह्मणोऽपि प्राप्यान्तरप्रापकतैव (प्रतीयते); न तु स्वयं प्राप्यता । किञ्च - 'एतं सेतुं तीर्त्वा' इति तरितव्यत्वाभिधानेन एतस्य प्राप्यत्वाभावाविष्करणात् वेदान्तेषु, 'चतुष्पात् ब्रह्म षोडशकलम्' (छां.उ. ३-८-२) इत्युन्मानश्रवणात् नेदमपरिमितम्, अपरिमितस्योन्मानासंभवात् । अतो वेदान्तेषु अपरिमितत्वेन प्रतीयमानमन्यदेवेति प्रतीयते । किञ्च - 'अमृतस्य परं सेतुम्' (श्वे.उ.६-१९) इति अमृतस्य वस्त्वन्तरस्य प्राप्यप्रापकत्वलक्षणः सम्बन्धः षष्ठ्या प्रतीयते । न हि स्वस्मिन्नेव प्राप्यप्रापकत्वलक्षणः सम्बन्धः संभवति । किञ्च - 'तेनेदं पूर्णं पुरुषेण सर्वं' (श्वे.उ.३-९)मिति प्रतिपादितपुरुषादपि, 'ततो यदुत्तरतरम्' (श्वे.उ.३-२०) इत्यधिकृत्य निर्देशात् परस्मादपि ब्रह्मणः परमन्यत् व्यपदिश्यते । अत एभ्यो हेतुभ्यः परस्मादपि ब्रह्मणः अन्यत् परमभ्युपगन्तव्यमिति, 'परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः' (ब्र.सू.३-२-३०) इति सूत्रेण पूर्वपक्षे प्राप्ते उच्यते -

'सामान्यात्तु' (ब्र.सू.३-२-३१) । 'य आत्मा सेतुः' इति व्यपदेशः, 'एषां लोकानामसंभेदाय' (छां.उ.८-४-२) इति वाक्यशेषश्रुतासंकरकारित्वलक्षण-धर्मसामान्यनिबन्धनः; 'एतं सेतुं तीर्त्वा' (छां.उ.८-४-२) इत्यत्र तरतिश्च प्राप्तिवचनः, वेदान्तं तरतीतिवत्; नोल्लङ्घनवचनः ।

यदुक्तम् उन्मानव्यपदेशादस्य परिमितत्वं प्रतीयत इति, तत्राह - 'बुद्ध्यर्थः पादवत्' (ब्र.सू.३-२-३२) । यथा 'मनो ब्रह्मेत्युपासीतेत्यध्यात्मम्', (छां.उ.३-१८-१) 'तदेतच्चतुष्पाद् ब्रह्म वाक् पादः, प्राणः पादः, चक्षुः पादः, श्रोत्रं पादः इत्यध्यात्मम्' (छां.उ.३-१८-२)

इत्यत्र ब्रह्म प्रतीकभूतमन आदौ वागादिपादत्वव्यपदेश उपासनार्थः, न तु तात्त्विकः, मनसो वागादिपादत्वासम्भवात् - एवम् अपरिच्छिन्नस्य ब्रह्मणः 'प्राची दिक् कला, प्रतीची दिक् कला, दक्षिणा दिक् कला, उदीची दिक् कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान् नाम' (छां.उ.४-५-२) इत्युक्तदिगादिलक्षणचतुष्कल-पादसम्बन्धासम्भवात् उपासनार्थ एव ।

ननु स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मान प्रतीतिः ? तत्राह, 'स्थानविशेषात् प्रकाशादिवत्' (ब्र.सू.३-२-३३) । यथा प्रकाशाकाशादेरपरिच्छिन्नस्यापि वातायनाद्युपाधि-वशेन परिच्छिन्नत्वाऽनुसन्धानम्, एवम् इहापि अभिव्यक्तिस्थानभूतप्रा (वा ?) गाद्युपाधिवशेन उन्मितत्त्वानुसन्धानमुपपद्यते ।

यदुक्तम्, 'अमृतस्य परं सेतुम्' इति सम्बन्धव्यपदेशे अमृतात् भेदोऽवगम्यत इति तत्राह - उपपत्तेश्च (ब्र.सू.३-२-३४) । 'यमेवैष वृणुते तेन लभ्यः' (मुं.उ.३-२-३) इति स्वप्राप्तेः स्वयमेव साधनतया जोघुष्यमाणे ब्रह्मणि स्वेनैव प्राप्यप्रापकत्वलक्षण-सम्बन्धव्यपदेशस्यापि नानुपपत्तिः ।

यदुक्तम् - 'ततो यदुत्तरतरम्' इति अधिकं वस्तु प्रतिपाद्यते इति, तत्राह - 'तथान्यप्रतिषेधात्' (ब्र.सू.३-२-३५) 'यस्मात् परं नापरमस्ति' (श्वे.उ.३-९) इति तदतिरिक्तोत्कृष्टवस्तुनो निषेधेन तद्विरुद्धतया, ततो यदुत्तरतरम् इति वाक्ये तदधिकवस्तूपक्षेपासम्भवात्, ततो यदुत्तरतरम्' इत्येतत् पूर्वोप (पूर्वप्रति) पादितस्य पुरुषपारम्यस्य उपरि उपसंहाररूपम् । एतञ्च पूर्वत्र तन्मन्त्रव्याख्यायां स्पष्टीकृतम् ।।

अनेन 'सर्वगतत्वमायामशब्दादिभ्यः' (ब्र.सू.३-२-३६) । अनेन - ब्रह्मणा सर्वगतत्वं - सर्वस्य जगतो व्याप्तत्त्वम् आयामशब्दादिभ्योऽवगम्यते । आयामशब्दस्तावत् 'तेनेदं पूर्णं पुरुषेण सर्वम् अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.ना.११) इत्यादि । आदि शब्देन, 'ब्रह्मैवेदं सर्वम्' (मुं.उ.२-३-११) इत्यादयो गृह्यन्ते । अतो न परब्रह्मणोऽन्यत् प्राप्यमस्तीति स्थितम् ।।

अस्याश्च उपनिषदः कृत्स्नाय भगवत्परत्वं सर्वव्याख्यानाधिकरणे व्यासार्यैः समर्थितम् । तदुच्यते । प्रथमद्वितीयखण्डयोः, 'देवात्मशक्तिम्' 'व्यक्ताव्यक्तं' '**भरते विश्वमीशः**', 'यदात्मतत्वेन तु ब्रह्मतत्वम्', 'ज्ञात्वा देवम्', 'एष हि देवः प्रदिशोऽनु सर्वाः' इति देवात्मेशब्रह्मशब्दैः परमात्मा निर्दिश्यते । ते च शब्दाः 'अपहतपाप्मा दिव्यो देव एको नारायणः' (अध्यात्म.उ.१) 'विश्वं नारायणं देवम् आत्मा नारायणः परः' (तै.ना.उ) 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च

ममाश्रितः । ईशः सर्वस्य जगतः' (कठ.उ.४-१२) 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' (मुं.उ.१-२-१३) इत्यादिवाक्यगत नारायणप्रत्यभिज्ञापकाः । अत्रेशशब्दश्च न रूढ्या प्रयुक्तः अपि तु गुणयोगात् । अनीशश्चात्मा, 'ज्ञाज्ञौ द्वावजानीशौ, (श्वे.उ.१-९) 'ईशः सर्वस्य' इति निर्देशस्य सप्रतिसंबन्धितया अवयव (वार्थ) विवक्षाज्ञापकत्वात् ।। अनन्तश्चात्मा विश्वरूपो ह्यकर्ता इत्यत्रानन्तशब्दो योगरूढः । रूढ्यविवक्षानिमित्तसप्रतियोगिकनिर्देशाभावात् ।

तृतीये च खण्डे, 'य एतद्विदुरमृतास्ते भवन्ति' (श्वे.उ.३-१) इत्यनेन 'अम्भस्य पारे' (महा.ना.१) इत्यनुवाकः प्रत्यभिज्ञाप्यते । स हि परमपुरुष विषयः । एवमुपक्रमो भगवत्परः । एको हि रुद्र इत्यस्यानन्तरम्, 'विश्वतः चक्षुरुत विश्वतोमुखः' इति मन्त्रश्च भगवत्प्रत्यभिज्ञापकः । तस्य विद्युद्वर्णपुरुषविषयत्वात् । 'द्यावाभूमी जनयन् देव एकः' (ऋ.वे.१०-८१-३) इति च, 'शीर्ष्णो द्यौः समवर्तत पद्भ्यां भूमिः' (ऋ.वे.१०-९०-१४) इत्यस्य प्रत्यभिज्ञापकम् । 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वम्' (श्वे.उ.३-४) इत्येतत्तु यच्छब्दयोगात् अनुवादरूपतया प्रमाणान्तरसापेक्षतया दुर्बलम् । इदं रुद्रस्य बह्वृचशतपथब्राह्मणावगत-हिरण्यगर्भजन्यत्वविरोधि हिरण्यगर्भजनकत्वं न प्रतिपादयितुं प्रभवति । बह्वृचे 'तदिदास भुवनेषु ज्येष्ठं यतो जज्ञे उग्रस्त्वेष नृम्णः । सद्यो जज्ञानो निरिणाति शत्रून्' (ऋ.वे.१०-१२०-१) इति हिरण्यगर्भस्रष्टृत्वं रुद्रशब्दरूढ्यर्थस्य प्रतिपाद्यते । सुबालोपनिषदि, 'ललाटात् क्रोधजो रुद्रः' (सुबा.उ.२-१) इति नारायणात् उत्पन्नत्वं प्रतीयते; महोपनिषदि 'सोऽन्यं कामं मनसा ध्यायीत । त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इति । नारायणोपनिषदि 'नारायणाद्रुद्रो जायते' (ना.उ.१) इति । बृहदारण्यके, 'ब्रह्म वा इदम्' (बृ.उ.३-४-११) इति ब्रह्म प्रस्तुत्य, 'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यः' (बृ.उ.३-४-११) इति इन्द्रादि तुल्यतया रुद्रस्यापि ब्रह्मणः सकाशादुत्पत्तिः प्रतिपाद्यते । शतपथे अष्टमूर्तिब्राह्मणे, 'भूतानां च प्रजापतिः संवत्सरमुषसि रेतोऽसिञ्चत् । संवत्सरे कुमारोऽजायत । सोऽरोदीत् । तं प्रजापतिरब्रवीत्, कुमारः! किं रोदिषीति । सोऽब्रवीत्, अनपहतपाप्मा वा अहमस्मीति अनाहितनाम्, नाम मे धेहि पाप्मनोऽपहत्या' इति । तं पुनः प्रजापतिरब्रवीत्, 'रुद्रोऽसीति' ( ) इत्यादिना रुद्रस्य चतुर्मुखजन्यत्वम् अनपहतपाप्मत्वादिकमावेद्यते । तथा शैलालिब्राह्मणे चतुर्मुखस्रष्टृत्वं रुद्रस्य प्रतिपाद्यते । साम्नि च विरूपाक्षाय दन्ताञ्जये (दत्ताञ्जलये) ब्रह्मणः पुत्राय इति ब्रह्मणः पुत्रत्वं प्रतीयते । सोऽब्रवीत् । वरं वृणौ । अहमेव पशूनामधिपतिरसानीति । तस्माद्रुद्रः पशूनाम् अधिपतिः इति वरदानलब्धपशुपतिं भावः श्रूयते, विष्णुरेवा(ष)ऽस्य प्रभृधे

हविर्भिः । विधेहि रुद्रियं महत्त्वम् (गी.सं.र.) इति विष्ण्वाराधनलब्धमहिमत्वं रुद्रस्य श्रूयते । अतो हिरण्यगर्भजन्यत्वेन, नारायणजन्यत्वेन च अनपहतपाप्मत्वेन, कर्माधीन ऐश्वर्यवत्त्वेन च श्रुतस्य रुद्रस्य तद्विरुद्धहिरण्यगर्भजनकत्वस्य अवताररूपोत्पत्तिरिति विरोधपरिहारस्य वा असम्भवात् । कल्पभेदेन एकस्यैव रुद्रस्य हिरण्यगर्भरूपात् स्वस्मादुत्पत्तिः कल्पान्तरे रुद्ररूपात् तस्मात् हिरण्यगर्भरूपतयोत्पत्तिरिति कल्पनस्यापि; कार्यत्वेन कर्मवश्यत्वेन (च?) प्रतिपादिते तस्मिन्नसम्भवात् । इन्द्रादीनामपि तथात्वापाताच्च । तस्य विश्वाधिकत्वरूप-विशेषणासम्भवाच्च । ततश्च रुद्र शब्दस्य कार्यरुद्रव्यतिरिक्तविषयत्वे सति, अस्य वाक्यस्य अनुवादरूपतया, 'नारायणाद् ब्रह्मा जायते' इत्यादि योग्यार्थप्रापक-वाक्यानुगुण्येन भगवत्परत्वनिश्चयः । रुद्रस्य हिरण्यगर्भजनकत्वाभावेन रूढ्यर्थत्यागे स्वीकार्ये हिरण्यगर्भशब्दस्य रूढिं परित्यज्य स्कन्दपरत्वमाश्रीयतां, प्रसिद्धस्य रुद्रस्य स्कन्दजनकत्वसम्भवात् इत्यपि शङ्का निरस्ता, विश्वाधिकत्वादिविशेषणानां रुद्रे असम्भवात् अतो रुद्रशब्दो भगवत्परः, 'रुद्रो बहुशिराः' (स.ना.११५) इति सहस्रनामपाठात् ।।

'या ते रुद्र शिवा तनू' रित्यस्यानन्तरम्, ततः परं ब्रह्म परं बृहन्तमिति वाक्यम्, 'नारायणः परं ब्रह्म' (महा.उ.९-४) इति महोपनिषत्प्रत्यभिज्ञापकम् । ईशं तं ज्ञात्वा अमृता भवन्ति इत्यत्र ईशशब्दः पूर्ववत् योगिकः । वैरूप्यायोगात् । वेदाहमित्यनन्तरवाक्यस्य एतच्छब्दः पूर्वरुद्रशब्दवाच्यस्य महापुरुषत्वमवगमयति । प्रकृतपरामर्शित्वात् । 'ततो यदुत्तरमिति' वाक्यमपि, 'परमतः सेतून्मान' (ब्र.सू.३-२-३०) इत्यत्रोपपादितरीत्या प्रकृतोपसंहारपरम् । सर्वाननशिरोग्रीवत्वञ्च पुंसूक्तार्थस्मारकम् । सर्वव्यापिपदं तु, व्याप्य नारायणः इत्येतत् स्मारयति । भगवच्छब्दस्तु, भगवान् पवित्रं वासुदेवः पवित्रम्, परं पवित्रं भगवान् वासुदेवः ये भगवन्तं वासुदेवमेवं विदुः इति वासुदेवासाधारणः । अत एव हि स्मर्यते,

'एवमेष महाशब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः' ।। (वि.पु.६-५-७६) इति ।

सत्त्वस्यैष प्रवर्तकः इति सत्त्वप्रवर्तकत्वं च भगवत इति स्थितम्; 'यो ह खलु वा अस्य सात्त्विकोंशः सोऽसौ ब्रह्मचारिणः योयं विष्णुः' (३-२) इति मैत्रायणीश्रुतेः । 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मे'ति अन्तरात्मत्वञ्च सुबालोपनिषत्प्रत्यभिज्ञापकम् । हृदा मनीषा इति तु विद्युद्वर्णपुरुषस्मारकम् । अनन्तरम्, 'सहस्रशीर्षा' इत्यादि पुरुषसूक्तमन्त्रद्वयमधीतम् । 'सर्वस्य प्रभुमीशानम्' इत्येतत् नपुंसकत्वात् यौगिकमेव । न तु रूढम्; पुल्लिङ्गताप्रसंगात् । 'सर्वस्य शरणं सुहृत्' इत्येतत्तु, 'निवासः शरणं सुहृद्गतिर्नारायणः'

इति श्रुतिप्रत्यभिज्ञापकम् । 'तमाहुरग्र्यं पुरुषं महान्त'मिति महापुरुष एव स्पष्टमुक्तः । धातृशब्दमपि महापुरुषशब्देन ऐकार्थयति अणोरणीयानिति मन्त्रः ।

चतुर्थे च खण्डे, 'द्वा सुपर्णा' इत्यादिवाक्यद्वयम् मुण्डकोपनिषदैकार्थ्यात् परमपुरुषपरम् । अतः 'मायिनं तु महेश्वरम्' (श्वे.उ.) इत्यत्र महेश्वरशब्दो मायाप्रेरकत्वपरः । सर्वलोकमहेश्वरम् (भ.गी.५-२९) 'क्षीरोदस्योत्तरे तीरे जग्मुर्लोकहितार्थिनः' ( ) इत्यारभ्य 'ततः स्वस्थो महेश्वरः' ( ) इत्यादिषु महेश्वरशब्दो भगवति प्रयुक्तः । 'येनेदं सं च वि चैति सर्वम्' इति प्रकृतं सर्वस्य नियन्तृत्वमेव तमीशानं वरदमित्यत्रोच्यते । पूर्वम् 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इति पुरुषस्योक्तत्वात् । तत्र च, 'ईशानो भूतभव्यस्य' इति श्रुत्यन्तरप्रसिद्धेशानशब्दस्य प्रतिसम्बन्ध्यभिधानेन रूढिविरहावगमात् भूतभव्यशब्द-निर्दिष्टस्यैवेह सर्वशब्दप्रतिपन्नत्वाच्च तद्वदेव रूढितिरहः सिद्धः । य ईशोऽस्य द्विपदश्चतुष्पदः त (क)'स्मै देवाय हविषा विधेम' इत्यत्र हिरण्ययगर्भ इत्यष्टर्चतुल्यविषयत्वं प्रतीयते । तच्च भगवत्परमित्युपपादितम् । एवं भगवत्परानेकोपनिषदैकार्थ्यप्रतीतेः, ज्ञात्वा शिवम्, शिव एव केवलः इति शिवशब्दद्वयं तत्परम् । एवं मुहुरभ्यस्यमानस्यापि शिवशब्दस्य, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान् इत्यत्र अभ्यस्ताकाश (शब्द?) स्येव रूढार्थत्याग उपपन्नः । किञ्च सर्वव्यापी च भगवान् तस्मात् सर्वगताः शिवः इत्ययं शिवशब्दः प्राकरणिकशिवशब्दानां माङ्गल्यपरत्वमेव सूचयति । सर्वगतत्वेऽपि भगवच्छब्दवाच्यत्वात् निर्दोष इति हि तस्य वाक्यस्यार्थः । अन्यथा सर्वव्यापिसर्वगतपदयोः पुनरुक्तिप्रसंगात् । 'तदक्षरं तत् सवितुर्वरेण्यम्' इत्यनेन 'अक्षरं प्रभुम् तत्सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम' ( ) इति श्रुतिद्वयैकार्थ्यमवगम्यते । 'हृदा मनीषा' इति वाक्यम्, 'नैनमूर्ध्वं न तिर्यञ्चमि'ति मन्त्रद्वयमध्यगतवाक्यस्थ शिवशब्दस्य परमपुरुषविषयतां गमयति । तद्धि त्रयं रुद्रान्तर्वर्तिविद्युद्वर्णपुरुषविषयम् । अतः, मा नं स्तोक इति मन्त्रस्थ रुद्रशब्दोऽप्यवयवशक्त्या अपर्यवसानवृत्त्या वा भगवद्विषयः ।

(अतः?) पञ्चमखण्डे, **भावाभावकरं शिव**मिति शिवशब्दो व्याख्यातः ।।

षष्ठे च - **यः कालकालः** इति कालस्यापि परिच्छेदकः काल उक्तः । नायमन्तकः । भगेशमित्यनेनापि भगवच्छब्दवाच्यानामैश्वर्यादीनां षण्णामीश्वरत्वमेव प्रतीयते । ऐश्वर्य-निरङ्कुशमेवोक्तम्, 'तमीश्वराणां परमं महेश्वर'मिति । ईश्वराणामिति प्रतिसम्बन्धिनिर्देशात् महेश्वरपदे रूढिर्न शक्यशङ्का । देवतानां परमं च दैवतमित्यनन्तरनिर्देशवत् । तद्धि वाक्यं देवतापारम्यपरम् । तत्र च दैवतप्रतिशब्दौ न क्वचित् देवताविशेषे रूढौ । तत्स्थानीयश्च महेश्वरशब्दः । अतो न रूढ्युन्मेषः । 'न तत्समश्च,' 'परास्य शक्तिः'

इत्यादिभिश्च तत्पारम्योपपादनात् । 'एको देवः, एको नारायणः' इत्यनेनैकार्थ्यात् । न तत्र सूर्यो भाति इति मन्त्रश्च कठवल्ल्यधीतत्वात् विष्णोः प्रत्यभिज्ञापकः । नान्यः पन्था इति, पुंसूक्तं स्मारयति । ईशादिशब्दानां यौगिकत्वम्; ईशानत्वस्य निरुपाधिकत्वञ्च दर्शयति - **स ईशोऽस्येति ।** यो ब्रह्माणं विदधाति पूर्वम्, शरणं प्रपद्ये, अमृतस्य परं सेतुं इति निर्देशाश्च नारायणत्वसाधकाः । य इत्यनुवादरूपत्वात्; ब्रह्मणो भगवन्नाभिसंभव(त्व)स्य प्रमाणप्रतिपन्नत्वात्; निवासः शरणं सुहृत् इति श्रुतेः, अमृतस्यैष सेतुः इति मुण्डके श्रवणात् । यदा चर्मवदाकाशम् इति वाक्यम् उपायान्तराभावपरम्, 'नान्यः पन्था' इत्युक्तार्थविवरणरूपम् ।

एवमुपक्रमोपसंहारादिभिः भगवत्परत्वावगमात् बहूपनिषच्छ्रुतयोग्यार्था - साधारणाभ्यस्त नारायणशब्दानुरोधेनैव नानार्थसाधारणैकैकोपनिषत्पठित योग्यार्थ-शिवादिशब्दानां नेयत्वाच्चास्या उपनिषदो भगवत्परत्वं सिद्धमिति ।।

**क्षेमाय यः करुणया क्षितनिर्जराणां**
**भूमावजृम्भयत भाष्यसुधामुदारः ।**
**वामागमाध्वगवदावदतूलवातो**
**रामानुजः स मुनिराद्रियतां मदुक्तिम् ।।**

**।। इति श्रीमत्तताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवासमधिगत-शारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवासमधिगतपारमहंसस्य श्रीरङ्गरामानुजमुनेः कृतिषु श्वेताश्वतरोपनिषत् प्रकाशिका सम्पूर्णा ।।**

**आ.भा.** - अथोपदिष्टरहस्यप्रकाशहेतुतया भगवद्भक्तिं गुरुभक्तिं चोषदिशति - **यस्येति । यस्य** जिज्ञासोः **देवे** ब्रह्मे ज्ञानादिसकलाराध्ये परब्रह्मणि भगवति श्रीरामे परोत्कृष्ट भक्तिर्भवेद् **यथा देवे तथागुरौ** भक्तिर्भवेत् **तस्य** महात्मनो देवभक्तितुल्य-गुरुभक्तिविशिष्टस्य पुरुषस्यैते कथिताः श्वेताश्वतरोपदिष्टा **अर्थाः** पदार्थाः **प्रकाशन्ते ।** देवप्रसादगुरुप्रसादद्वयेनावभासन्ते नान्यस्येत्यर्थः समादरं संसूचयति द्विरुक्तिः ।। २३ ।।

**।। इति श्वेताश्वतरोपनिषदो भगवच्छ्रीरामानन्दाचार्यप्रणीतानन्दभाष्ये षष्ठोऽध्यायः ।। ६ ।।**

❀ ❀ ❀

## अनुबन्धाः

# १. मन्त्राणामकारादि सूचनी

# २. प्रमाणानामकारादि सूचनी

## ३. श्वेताश्वतरोपनिषदर्थसङ्ग्रहकारिकाः

(श्री उत्तमूर वीरराघवाचार्यस्वामि विरचिताः)

बृहदारण्यकान्तासु गतास्वीशादिषु क्रमात् ।
श्वेताश्वतरमन्त्रोपनिषदेकादशी स्थिता ।। १ ।।

भोक्तृभोग्यात्मचिदचिदन्तरात्मैव कारणम् ।
अष्टाङ्गयोगतो जीवं समीक्ष्यैष निरीक्ष्यते ।। २ ।।

एकोऽसौ भगवान् मुक्तेः पन्था जन्मलयादिकृत् ।
अकारार्थोऽयमग्न्यादिदेवतादिजगन्मयः ।। ३ ।।

कर्मार्हपरतन्त्राणुजीवतत्त्वविलक्षणः ।
ब्रह्मादिकृत् प्रपत्त्येकवश्यो विश्वफलप्रदः ।। ४ ।।

श्वेताश्वतरखण्डानां षट्केनेत्थं समीक्षितः ।
शिवरुद्रादि शब्दोक्त्या भगवान् पुरुषोत्तमः ।। ५ ।।

❀ ❀ ❀

## ४. श्रीभाष्योदाहृत उपनिषन्मन्त्राणां सूचनी

| | उपनिषन्मन्त्राः | ब्रह्मसूत्र.सं. | अधिकरण.सं. |
|---|---|---|---|
| १. | पृथगात्मानं प्रेरितारं च (१-६) | ४-१-३ | ४-१-२ |
| २. | समे शुचौ (२-१०) | ४-१-११ | ४-१-५ |
| ३. | तेनेदं पूर्णं पुरुषेण (३-९) | ३-२-३० | ३-२-७ |
| ४. | ततो यदुत्तरतरम् (३-१०) | ३-२-३० | ३-२-७ |
| ५. | अजामेकां लोहितशुक्ल... (४-५) | १-४-८ | १-४-२ |
| ६. | संयुक्तमेतत् क्षरमक्षरं (१-८) | १-४-८ | १-४-२ |
| ७. | ज्ञाज्ञौ द्वाजावीशनीशौ (१-९) | १-४-८ | १-४-२ |
| ८. | क्षरं प्रधानं (१-१०) | १-४-८ | १-४-२ |
| ९. | छन्दांसि यज्ञाः (४-९) | १-४-८ | १-४-२ |
| १०. | मायां तु प्रकृतिं (४-१०) | १-४-८,२३ | १-४-२,७ |
| ११. | अङ्गुष्ठमात्रो रवितुल्यरूपः (५-८) | २-३-२३, १-३-२३ | २-३-४, १-३-६ |
| १२. | वालाग्रशतभागस्य (५-९) | २-३-२३ | २-३-४ |
| १३. | निष्कलं निष्क्रियं (६-१९) | १-४-२३ | १-४-७ |

# ५. भगवन्नामावलिः

## ६. मन्त्रगताः विशेषशब्दार्थाः

| | |
|---|---|
| **१. कालः (१-२)** | कालो नाम सर्वभूतानां विपरिणामहेतुः । (शंकरभाष्यम्) |
| **२. स्वभावः (१-२)** | स्वभावो नाम पदार्थानां प्रतिनियता शक्तिः । अग्नेः औष्ण्यमिव । (शं.भा.) |
| **३. नियतिः (१-२)** | अविषमपुण्यपापलक्षणं कर्म तद्वा कारणम् । (शंकरभाष्यम्) |
| **४. यदृच्छा (१-२)** | आकस्मिकी प्राप्तिः (शंकरभाष्यम्) |
| **५. विश्वरूपः (१-४)** | विराट् पुरुषः । (प्र.) |
| **६. पञ्चस्रोतोम्बु (१-५)** | स्रोतोरूपेणाविच्छिन्नतया प्रवर्तमानानि तमोक्षराव्यक्त-महदहङ्काररूपाणि अम्बुस्थानीयानि यस्याः सा (प्रकृतिः) तथोक्ता । (प्र.) |
| **७. पञ्चयोन्युग्रवक्त्रा (१-५)** | महाभूतोपादानतया योनिभूतानि पञ्चतन्मात्राण्येव उग्रवक्त्राणि यस्याः सा पञ्चयोन्युग्रवक्त्रा । (प्र.) |
| **८. पञ्चप्राणोर्मिः (१-५)** | पञ्च प्राणापानादयः ऊर्मिस्थानीयानि यस्या सा पञ्चप्राणोर्मिः । (प्र.) |
| **९. पञ्चबुद्ध्यादिमूला (१-५)** | बुद्धेः ज्ञानस्यादिभूतानि पञ्च ऊर्मिस्थानीया यस्या सा पञ्चबुद्ध्यादिमूला (प्र.) |
| **१०. पञ्चावर्ता (१-५)** | पञ्चकर्मेन्द्रियाणि आवर्तस्थानीयानि यस्या सा पञ्चावर्ता । (प्र.) |
| **११. पञ्चदुःखौघवेगा (१-५)** | पञ्चमहाभूतानि अत्यन्तप्रतिकूलतया प्रवर्तमानानि ओघवेगस्थानीयानि यस्याः सा पञ्चदुःखौघवेगा । (प्र.) |
| **१२. हंसः (१-६)** | जीवः । हन्ति गच्छति अनेकजन्मसहस्र-सञ्चरणशील इति हंसः । (प्र.) |
| **१३. सर्वसंस्थम् (१-६)** | सर्वेषां संस्था-समाप्तिः प्रलयो यस्मिन् तत् सर्वसंस्थम् ।। (प्र.) |
| **१४. हरः (१-१०)** | भोग्यात्मनो भोगार्थं हरतीति हरः, जीवः । (प्र.) |

| | |
|---|---|
| **१५. सविता (२-१)** | प्रेरकः परमात्मा । (षू प्रेरणे धातोः तृच् प्रत्ययः) (प्र.) |
| **१६. वाहः (२-९)** | रथः (प्र.) |
| **१७. सम्भवः (३-१)** | सम् इत्येकीकारे लयापरपर्याय एकीभावः । (प्र.) |
| **१८. रुद्रः (३-२)** | संसाररुजं द्रावयतीति रुद्रः । संसारमोचकः इत्यर्थः । (प्र.) |
| **१९. गिरित्रः (३-६)** | गीः - वेदान्तः । तत्र त्रायते पाल्यते प्रतिपाद्यते इति वेदान्तप्रतिपाद्यत्वं गिरित्रशब्दार्थः । (प्र.) |
| **२०. अक्षरम् (४-८)** | न क्षरतीति अक्षरम् । परमात्मा । (प्र.) |
| **२१. गोप्ता (४-१५)** | संरक्षकः संसारमोचकः । (प्र.) |
| **२२. कलिलम् (५-१३)** | कार्यम् । (प्र.) |
| **२३. ज्ञानबलक्रिया (६-८)** | ज्ञानबलाभ्यां सहिता सृष्टिसंहारादिलक्षणक्रिया ज्ञानबलक्रिया । (प्र.) सर्वविषयज्ञानप्रवृत्तिः ज्ञानक्रिया स्वसंनिधिमात्रेण सर्वं वशीकृत्य नियमनम् बलक्रिया (शं.भा.) |
| **२४. करणाधिपः (६-९)** | जीवः । (प्र.) |
| **२५. करणाधिपाधिपः (६-९)** | परमात्मा । (प्र.) |
| **२६. विश्वकृत् (६-१६)** | सर्वकर्ता । (प्र.) |
| **२७. विश्ववित् (६-१६)** | सर्वं प्राप्तः । (प्र.) |
| **२८. आत्मयोनिः (६-१६)** | आत्मा योनिः स्थानं यस्य सः । जीवान्तर्यामी । (प्र.) |
| **२९. सर्वविद्यः (६-१६)** | सर्वविद्याप्रवर्तकः । (प्र.) |
| **३०. प्रधानक्षेत्रज्ञपतिः (६-१६)** | प्रकृतिजीवयोः शेषी । (प्र.) |
| **३१. गुणेशः (६-१६)** | ज्ञानादिषाड्गुण्यपरिपूर्णः । (प्र.) |
| **३२. अमृतः (६-१७)** | असंसारी । (प्र.) |

❋ ❋ ❋

## ७. सङ्केताक्षरसूचनी

| | |
|---|---|
| अ.को. | अमरकोशः |
| अध्यात्म. उ. | अध्यात्मोपनिषत् |
| आप.श्रौ. | आपस्तम्बश्रौतसूत्रम् |
| ऋ.वे. | ऋग्वेदः |
| ऐ.उ. | ऐतरेयोपनिषत् |
| कठ.उ. | कठोपनिषत् |
| छां.उ. | छान्दोग्योपनिषत् |
| धा.पा. | धातुपाठः |
| तै.उ.आन. | तैत्तिरीयोपनिषत् आनन्दवल्ली |
| तै.आर. | तैत्तिरीय आरण्यकम् |
| तै.ना. | तैत्तिरीय नारायणोपनिषत् |
| तै.उ.भृ. | तैत्तिरीयोपनिषत् भृगुवल्ली |
| ना.उ. | नारायणोपनिषत् |
| पा.सू. | पाणिनीयसूत्रम् |
| पाद्मोत्तर | पाद्मोत्तरपुराणम् |
| पु.सू. | पुरुषसूक्तम् |
| पू.मी.सू. | पूर्वमीमांसा सूत्रम् |
| बृ.उ. | बृहदाहरण्यकोपनिषत् |
| बृ.उ.मा.पा. | बृहदारण्यकोपनिषत् माध्यन्दिनपाठः |
| ब्र.सू. | ब्रह्मसूत्रम् |
| भ.गी. | भगवद्गीता |
| भवसं.उ. | भवसन्तरणोपनिषत् |
| भाग. | भागवतम् |
| मन्त्रि.उ. | मन्त्रिकोपनिषत् |
| महा.ना. | महानारायणोपनिषत् |

| | |
|---|---|
| **महा.भा.मो.प.** | महाभारतमोक्षपर्व |
| **महा.भा.शां.प.** | महाभारतशान्तिपर्व |
| **महो** | महोपनिषत् |
| **मैत्रा.उ.** | मैत्रायणी उपनिषत् |
| **मुं.उ.** | मुण्डकोपनिषत् |
| **रामर.उ.** | रामरहस्योपनिषत् |
| **वा.रा.यु.कां.** | वाल्मीकिरामायण युद्धकाण्डम् |
| **वा.रा.सु.कां.** | वाल्मीकिरामायण सुन्दरकाण्डम् |
| **वा.रा.अ.कां.** | वाल्मीकिरामायण अरण्यकाण्डम् |
| **वा.रा.उ.कां.** | वाल्मीकिरामायण उत्तरकाण्डम् |
| **वि.पु.** | विष्णुपुराणम् |
| **व्या.स्मृ.** | व्यासस्मृतिः |
| **शत.ब्रा.** | शतपथब्राह्मणम् |
| **स.ना.** | सहस्रनाम (विष्णु) |
| **सुबा. उ.** | सुबालोपनिषत् |

## ८. ग्रन्थसूचनी

### मूलग्रन्थाः

**अष्टोत्तरशतोपनिषदः -** आदिकालानिधि प्रेस्, मद्रास्, १८८३, आन्ध्रीलिपिः ।

**अष्टोत्तरशतोपनिषदः -** वेङ्कटकृष्णशास्त्रिणा सम्पादितम् । मद्रास् - १८९६, ग्रन्थलिपिः ।

**अष्टाविंशत्युपनिषदः -** ईशादिमुक्तिकोपनिषत्पर्यन्तम् । वासुदेवलक्ष्मणशास्त्रि पन्सीकरेण सम्पादितम् ; निर्णयसागरप्रेस्, बम्बई - १९२८, दे.ना.लिपिः ।

**ईशादिविंशदुत्तरशतोपनिषदः -** काव्यतीर्थनारायण रामाचार्येण सम्पादितम् । ईशादिमुक्तिपर्यन्तम् । निर्णयसागर प्रेस्, बम्बई - १९२८, दे.ना.लिपिः ।

**अष्टादश उपनिषदः -** वैदिकवाङ्मयान्तर्गतसमानस्थलनिर्देशैः अर्थव्याकरणावबोधकटिप्पणीभिश्च सनाथीकृतम् । वैदिक संशोधन मण्डलम् - पुणे - २, १९५८, दे.ना.लिपिः ।

**दि शैव उपनिषत्स् -** उपनिषद्ब्रह्मयोगिकृतव्याख्यासहिता । ए.महादेवशास्त्रिणा सम्पादितम् । दि अडयार लैब्ररि एण्ड् रिसर्च सेन्टर, अडयार, मद्रास् - १९५० । दे.ना.लिपिः ।

**पञ्चत्रिंशदुपनिषदः -** ईशादि आत्मबोधोपनिषत् पर्यन्तम् । गङ्गाविष्णु श्रीकृष्णदासः, बम्बई - १९६० ।

**उपनिषत्सङ्ग्रहः -** (भागद्वयोपेतः) प्रथमभागे ईशादिविंशोत्तरशतोपनिषदः, द्वितीये च योगाद्यष्टोत्तरषष्ट्युपनिषदः । जगदीशशास्त्रिणा सम्पादितम् । मोतीलाल बनारसीदास्, बंग्लो रोड्, जवाहरनगर, दिल्ली - ७, १९७०, १९८० ।

### भाष्यग्रन्थाः

**धर्मकोशः -** उपनिषत्काण्डम् । (तृतीयो भागः) लक्ष्मणशास्त्रिजोशिना सम्पादितम् । बृहदारण्यक ईश-केन-काठक-मुण्डक-प्रश्न-माण्डूक्य-मन्त्रब्राह्मणोपनिषत्-तैत्तिरीयोपनिषत् -छान्दोऽग्य-श्वेताश्वतर-नारायणोपनिषत्-मैत्रायण्युपनिषत्-कैवल्य-अथर्वशिखा उपनिषदां रङ्गरामानुजभाष्येण - शंकरभाष्येण-मध्वभाष्येण सहितम् । प्रज्ञापाठशाला मण्डलम् । वायि. सतारा १९४९, दे.ना.लिपिः ।

**श्वेताश्वतराद्युपनिषत्पुरुषसूक्तभाष्यम्** - श्रीरङ्गरामानुज प्रभृतिपूर्वाचार्यविरचितम् । उपोद्घातटिप्पणी सहितम् उत्तमूर ति. वीरराघवाचार्येण सम्पादितम् । **श्रीवङ्कटेश्वर** ओरियण्टल् सिरीज्, तिरुमल तिरुपति देवस्थानं, तिरुपति, १९५५, देवनागरीलिपिः ।

**श्वेताश्वतरोपनिषत्** - शाङ्करभाष्योपेता तथा शंकरानन्दकृता दीपिका, नारायणकृता दीपिका, विज्ञानभगवत्कृतं विवरणम् । आनन्दाश्रमस्थपण्डितैः संशोधितम् । आनन्दाश्रम संस्कृत ग्रन्थावलिः, पुणे - १९८२, दे.ना.लिपिः ।

**श्वेताश्वतरोपनिषत्** - शाङ्करभाष्योपेता । हिन्दी अनुवादसहिता । गीताप्रेस् गोरखपुरः, १९३८, १९४३, १९५२.

**केनाद्युपनिषत्पुरुषसूक्तभाष्यम्** - रङ्गरामानुजमुनिविरचितम् - केन-कठ-प्रश्न-मुण्डक-माण्डूक्य श्वेताश्वतर-अथर्वशिखा - कौषीतकी - मन्त्रिका - अग्निरहस्यभाष्यम् । सुदर्शनसूरि प्रणीतं सुबालोपनिषद्भाष्यम् । उत्तमूर ति. वीररघावाचार्येण सम्पादितम् । उभयवेदान्तग्रन्थमाला मद्रास् - १९७२ । दे.ना.लिपिः । २५, नाथमुनिवीथी टि.नगर, मद्रास् ।

**श्वेताश्वतरोपनिषत्** - कन्नडानुवादसहिता । अनुस्वामी आदिदेवानन्दः रामकृष्णमठ, मैसूरु, १९८१ ।

**दि प्रिन्सिपल् उपनिषत्स्** - एस्. राधाकृष्णन्, आक्सफर्ड यूनवर्सिटि प्रेस्, । एम्.सि.ए. लैब्ररी बिल्डिंग्, जै. - सिंग् रोड्, न्यू दिल्ली, १९५३, ६८, ६९, ७४ ।

**श्वेताश्वतरोपनिषत्** - शाङ्करभाष्योपेता । अनु स्वामी गम्भीरानन्दः ; अद्वैताश्रम, ५, देही एण्डलिरोड्, कल्कता, १९८६ ।

❀ ❀ ❀